# YÂDNYAVALKYASMṚITI

OF

## YOGÎSHVARA YÂDNYAVALKYA

With the Commentary Mitâksharâ

OF

## VIDNYÂNESHVARA.

EDITED BY

WÂSUDEV LAXMAN SHÂSTRÎ PANSÎKAR.


PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ [illegible]AJÎ'S "NIRṆAYA-SÂGAR" PRESS,

Bombay.

1909.

Pr[illegible]e [illegible] Rupees.

श्रीः ।

श्रीमद्योगीश्वरमहर्षियाज्ञवल्क्यप्रणीता

# याज्ञवल्क्यस्मृतिः ।

विज्ञानेश्वरप्रणीतमिताक्षराव्याख्यासंवलिता ।

इयं च

पणशीकरोपाह्वलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा

स्मृत्यादिप्राचीनधर्मशास्त्रग्रन्थालोचनेन टिप्पण्यादिभिः

वर्णक्रमकोशेन च सनाथीकृता ।

मुम्बय्यां

तुकाराम जावजीनां कृते

तेषामेव निर्णयसागरमुद्रणयन्त्रालये बाळकृष्ण रामचन्द्र घाणेकर

इत्यनेन मुद्रयित्वा प्राकाश्यं नीता ।

शकाब्दाः १८३१, सनाब्दाः १९०९.

मूल्यं २ रूप्यद्वयम् ।

# किंचित्प्रास्ताविकम् ।

इह जगदारम्भात्प्रागजगतो विचारणायां **'नासदासीन्नो सदासीत्'** **'तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदं'** **'अम्भः किमासीत्'** इत्यादिश्रुतिवचोभ्यस्तर्कागोचरमेवाखिलं प्रतीयते । ततश्च **'को अद्धा वेद य इह प्रवोचत्कुत आ जाता कुत इयं विसृष्टिः ।'** इत्यादिविमर्शनोत्तरं **'यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद'** इत्येवंरीत्या निर्णयश्च निगममूलक एवेति मानुषप्राणिदुस्तर्क्यमेव कृत्स्नं खलु। अथापि जगदन्तःपातिभिर्निजप्ररोहमूलगवेषणं स्वमतिपरिणामावध्यनुमेयमेव । निर्दिष्टरूपजगदभावदशायां च **'स ईक्षत बहु स्यां प्रजायेय'** इति श्रुतेः सर्गादावतर्क्यैन्द्रजालिकेन सिसृक्षुणा भगवता स्थावरं जंगमं जगत् धर्माधर्मौ च सृष्ट्वाखिलव्यवहाराय तत्तच्छब्दानां तेन तेनार्थेन संबन्धं कल्पयित्वा धर्माधर्मप्रतिपादकपदे वेदान्कल्पयित्वा हिरण्यगर्भादिभ्यः प्रतिपादितास्तैरन्येभ्य इत्येवमुत्तरोत्तरं शब्दार्थप्रतिपत्तिः । एवं परंपरासादितश्रुतिभागा मन्त्रद्रष्टार ईशसृष्टजनतार्थं विशेषतश्च दुःषमानुभावेनापचीयमानमेधायुर्बलादिगुणानामैदंयुगीनमानुषप्राणिनां निःश्रेयसकाङ्क्षिणः पारिकाङ्क्षिणोऽखिलव्यवहाराय केवलनिगमानामचारितार्थ्यं मन्वाना नानासूत्रस्मृतीतिहासादीन्धर्मशास्त्रप्रतिपादकान्निबन्धान्परिकल्पयांबभूवुः ।

तथाच **'भारतं पञ्चमो वेदः'** इति पञ्चमवेदत्वेन सुप्रतिष्ठितेऽखिलधर्मशास्तरि **महाभारते** युधिष्ठिरंप्रति भीमसेनवचः—**'धर्ममर्थं च कामं च यथावद्वदतांवर । विभज्य काले कालज्ञः सर्वान्सेवेत पण्डितः ॥'** इति । स्मृत्यन्तरेऽपि—**'धर्ममर्थं च कामं च यथाशक्ति न हापयेत् ।'** इति । **तथा—'न पूर्वाह्णमध्यंदिनापराह्णानफलान्कुर्याद्यथाशक्ति धर्मार्थकामेभ्यः'** इति । तत्र निरतिशयानन्दलक्षणस्यात्यन्तिकदुःखनिवृत्तिलक्षणस्य वा मोक्षस्यैव निरुपधीच्छाविषयत्वात्पुरुषेणाभ्यर्थ्यमानतया मुख्यं पुरुषार्थत्वम् । धर्मादीनां तु तत्साधनमात्रेण । तत्रापि धर्ममात्रं यथायोगं सर्वेषां साधनम् । अतएव प्रवृत्तिनिवृत्त्यात्मकतया द्विविधस्यापि धर्मस्य पुरुषार्थसाधनतोक्ता वृद्धैः—**'प्रवृत्तिलक्षणे धर्मे फलमभ्युदयो मतः । निवृत्तिसंज्ञके धर्मे फलं निःश्रेयसं मतम् ॥'** इति । स्कान्देऽपि—**'धर्मात्सुखं च ज्ञानं च यस्मादुभयमाप्नुयात् । तस्मात्सर्वं परित्यज्य विद्वान्धर्मं समाचरेत् ॥'** इत्यादि परःशतप्रमाणवचोनिचयैर्धर्मएवाखिलस्थितिहेतुत्वेन राद्धान्तितो दरीदृश्यते ॥ तथाच धर्मशब्दं निर्णिनीषुः सुगृहीतनामा भगवान् जैमिनिरसुसूत्रत् **"चोदनालक्षणोऽर्थो धर्मः"** इति । अनेन सूत्रेण धर्मस्वरूपं तत्प्रमाणं चोच्यते । न तावद्यागापूर्वोभयनिष्ठा धर्मत्वं जातिः । यागस्य क्रियेच्छान्यतररूपतया क्रियात्वेनेच्छात्वेन च संकरात् । अतोऽपूर्वनिष्ठैव सुखकारणतावच्छेदिका धर्मत्वं जातिरिति नैयायिकाः । अपूर्वमजानतामपि

यागादिकर्तरि धार्मिक इति प्रयोगाद्वेदबोधितेष्टसाधनत्वरूपो यागापूर्वोभयनिष्ठोपाधिरेव धर्मत्वमिति केचित्। वस्तुतस्तु **अलौकिकश्रेयःसाधनत्वेन** विहितक्रियात्वं विहितत्वं वा धर्मत्वमिति स्फुटं निरणायि विद्वल्ललामेन **गागाभट्टेन** ॥ **मिताक्षराकारस्तु**— धर्मशब्दः षड्विधस्मार्तधर्मविषयः । तद्यथा—वर्णधर्म आश्रमधर्मो वर्णाश्रमधर्मो गुणधर्मो निमित्तधर्मः साधारणधर्मश्चेति । तत्र वर्णधर्मो नित्यं मद्यं वर्जयेदित्यादिः । आश्रमधर्मोऽग्नीन्धनभैक्षचर्यादिः । वर्णाश्रमधर्मः पालाशो दण्डो ब्राह्मणस्येत्येवमादिः । गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः । निमित्तधर्मो विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम् । साधारणधर्मोऽहिंसादिः 'न हिंस्यात्सर्वा भूतानीत्याचाण्डालं साधारणो धर्मः' इति । एवं गुणविशिष्टधर्मप्रतिपादकं शास्त्रमेव धर्मशास्त्रमिति जेगीयते । आस्तां दुरूहविषयमीमांसाविस्तरेण । प्रकृतमनुसरामः ।

अखिलधर्माणामाचार–व्यवहार–प्रायश्चित्ताख्यकोटित्रयपर्यवसानात्तद्विवेचनमन्तरा दुर्ज्ञेयैव धर्मशास्त्रसिद्धिरिति विचार्य सर्वमानवप्राण्युद्दिधीर्षुः परमकारुणिको **याज्ञवल्क्ययोगीन्द्रो** निजनामधेयोट्टङ्कितां **याज्ञवल्क्यस्मृति**मचीक्लृपत् । अथच वाचंयमवचोगुम्फस्य सूत्रवदल्पाक्षरत्वेन दुरूहस्य यथावदवबुबोधयिषुरखिलश्रुतिस्मृतिशास्त्राब्धिपारदृश्वा सर्वतन्त्रस्वतन्त्रो **विज्ञानेश्वरो** विपुलार्थवतीमपि प्रमिताक्षरां **मिताक्षरानाम्नीं** याज्ञवल्क्यस्मृतिव्याख्यामरीरचत् ।

यद्यपि याज्ञवल्क्यस्थितिकालः पुरुषायुषेण मतिमदग्रेसरेणापि निश्चेतुमशक्यस्तथापि श्रीमद्भागवतद्वादशस्कन्धे—'**ते परंपरया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः । चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥**' अस्यार्थः—एवं चतुर्युगेषु प्राप्ताः द्वापरादौ द्वापरमादिर्यस्य तदयनांशलक्षणस्य कालस्य तस्मिन्द्वापरान्ते वेदविभागसिद्धेः शांतनुकालसमकालं व्यासावतारप्रसिद्धेश्च । व्यस्ता विभक्ताः । '**अस्मिन्नप्यन्तरे ब्रह्मन्भगवाँल्लोकभावनः । ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ पराशरात्सत्यवत्यामंशांशकलया विभुः । अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥**' इति । अतो द्वापरस्यान्तिमकाले कलियुगारम्भात्पूर्वं व्यासावतारः । स च तदानीमेव ऋगादिसंहिताश्चतस्रो विभज्यैकैकस्मै शिष्यायैकैकां संहितां ददौ । तत्र च यजुर्वेदसंहितां **वैशंपायना**यादात् । तस्यैवान्तेवासी **याज्ञवल्क्यो** बभूवेति निश्चीयते ।

एकदा विदेहत्वेन सुप्रसिद्धस्य जनकस्य सदस्येव ब्रह्मवादचर्चाप्रसङ्गे **कहोडादिब्रह्मर्षिवरै** राज्ञा विदेहेन च याज्ञवल्क्याग्रे ब्रह्मविद्योपनिबद्धास्तत्रतत्र नैकशः पूर्वपक्षाः कृतास्तदानीं **याज्ञवल्क्यो** निजातर्क्यमतिवैभवेन सर्वेषां पूर्वपक्षाणां यथावदुत्तररूपेण सर्वान्समादधे । तच्छ्रुत्वा ससभास्तारो राजा दानमानादिसत्कारैस्तं संपूज्य प्रशस्य सएवानूचानतम इति निश्चित्य साष्टाङ्गं प्रणनामेति ।

अथ **श्रीमद्याज्ञवल्क्यमहर्षे**रितिवृत्तं किमप्यत्र निर्दिश्यते । तच्च श्रुतिशिरोभाग**बृहदारण्यकोपनिषदि** तृतीयाध्याये एवं निर्दिष्टमासीत्—कदाचन विदेहानां सम्राट् **जनकराजः** श्रुतिशास्त्रोदितवैदिककर्मण्यभिरतो बहुदक्षिणेन यज्ञेनायजत् । तत्र कुरुपाञ्चालवासिनो वैतानिककर्मनिष्णाता राज्ञा निमन्त्रिता ब्राह्मणाः

केचन यज्ञदिदृक्षवश्चाभिसंगता बभूवुः। अथ मिलितं विद्वत्समाजमालोक्य इयक्षमाणस्य जनकस्य जिज्ञासा बभूव किल कोनु खल्वत्रानूचानतमो ब्रह्मिष्ठ इति। स च गवां सहस्रं रुद्ध्वोवाच हे भगवन्तः, यो वो ब्रह्मिष्ठः स एता गा उत्कालयतु स्वगृहं प्रतीति। तदैते ब्राह्मणा न दधृषुः। अथ याज्ञवल्क्यो निजमन्तेवासिनमुवाच हे सौम्य, उत्कालयेमा गा अस्मद्गृहान्प्रतीति । एतच्छ्रुत्वा सचोत्कालितवानाचार्यगृहं प्रतीत्याख्यायिकायामखिलविप्रसमाजापमाननमभवत् ।

अथ कदाचन वैशंपायनस्य ब्रह्महत्यादोष उदभूत् । तदंहोनिबर्हणाय वैशंपायनः स्वच्छात्रान् ब्रह्महत्यामार्जनक्षमं व्रतमादिदेश । तदानीं याज्ञवल्क्यः प्रोवाच भगवन्, श्रीमदुक्तं व्रतं सुदुश्चरमप्यहमेवाचरिष्ये किमल्पसाराणामेतेषामादेशेनेति। तदिदं विप्रावमानकारकं याज्ञवल्क्योक्तं श्रुत्वा वैशंपायनश्चुक्रोध । आह च याज्ञवल्क्यं ब्राह्मणावमन्ता त्वमसि अतो मत्तो यदधीतं तत्सर्वं त्यक्त्वा याहीति । तदसदिष्णुर्याज्ञवल्क्योऽधीतं यजुर्वेदगणं छर्दित्वा गुरुमुत्सृज्यागच्छत् । आरराधच भगवन्तं सूर्यनारायणमेकान्तभावेन । निःसीमनिजपरिचरणपरितुष्टो भगवानादित्योऽयातयामानि यजूंषि तस्मै प्रायच्छत् । तैर्याज्ञवल्क्यो वाजसनीसंज्ञाः शाखा अकरोत् इति **श्रीभागवते ।**

**विज्ञानेश्वरविषये** मिताक्षरोपसंहारे—

**'नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं**
**नो दृष्टः श्रुतएव वा क्षितिपतिः श्रीविक्रमार्कोपमः ।**
**विज्ञानेश्वरपण्डितो न भजते किंचान्यदन्योपम-**
**श्चाकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम् ॥**
**स्रष्टा वाचां मधुरवपुषां विद्वदाश्चर्यसीम्नां**
**दातार्थानामतिशयजुषामर्थिसार्थार्थनामा ।**
**आ च प्राचः समुद्रान्नतनृपतिशिरोरत्नभाभासुरांघ्रिः**
**पायादाचन्द्रतारं जगदिदमखिलं विक्रमादित्यदेवः ॥'**

इत्यादिलेखादस्य नृपविक्रमादित्यकालीनत्वं स्फुटं भवति। तत्र कल्याणपुरमिति नाम्ना प्रसिद्धं नगरमस्त्यधुना हैद्राबादराज्ये कल्याणकीर्तिनाम्ना प्रथितम्। तत्रत्या राजानश्चौलुक्यान्ववायाः । तेषां वंशावलिर्दक्षिणेतिहासाख्यकोशे भाण्डारकरोपाह्वै रामकृष्ण गोपालसंज्ञया प्रथितैः सविस्तरं प्रकाशितास्ति। तत्रैव **विक्रमादित्यराजा** समजनि यदाश्रयेणैव विदुषामग्रेसरेण विज्ञानेश्वरेण **मिताक्षराख्या** याज्ञवल्क्यस्मृतिव्याख्या निरमायि । तस्य च राज्यकालो न्यूनसहस्रशाकमारभ्य न्यूनपञ्चाशदधिकसहस्रमितशकपर्यन्तं पञ्चाशदब्दमित एवासीत् । एवंसति गुर्जराङ्कितयाज्ञवल्क्यस्मृतिप्रस्तावे बापूशास्त्रीमोघे इत्येतैः 'विक्रमादित्यकालीनोयं विज्ञानेश्वरः तद्ग्रन्थस्य मिताक्षराख्यस्य संवदभिधशकप्रवर्तकविक्रमादित्यदेवकालिकतावसीयते' इत्यादिप्रकटितं परास्तम् ।

यद्यप्ययं ग्रन्थो बहुभिर्बहुवारमङ्कनादिना प्रकाशितएवासीत्तथापि तेष्वनवधानालस्याव्युत्पत्त्यादिमूलका नैकशो मूले व्याख्यायां च तत्रतत्रानवसरविराम-विरामस्थ-

लसंयोजना-संबद्धाक्षरग्रथन-मूलव्याख्याविसंवादादिजन्मानोऽर्थानवबोधेन तिरस्काराबहाः प्रमादा बहवोऽस्मिन्ग्रन्थे सन्त्येव। अतस्तन्मार्जनपूर्वं सम्यक्परिशोध्याङ्कनीयोयं महानिबन्धो भूयादखिललोकोपकारक इति बहुभिर्गीर्वाणवाङ्मयपरायणैर्धर्मैकधुरीणैर्वैदिकगृहस्थोभयसरणिभिः श्रेष्ठिवरश्रीमत् तुकाराम जावजीसविधे निरपेक्षबुद्ध्या सूचितं तैरादृत्य परिशोधने नियोजितेन मया सूक्ष्मैषिकया यथामति परिष्कृतोयं ग्रंथ इति सुधियो विदांकुर्वन्तु।

एतच्छोधने संगृहीतहस्तलिखितप्राचीनादर्शपुस्तकानीत्थम्—

१ वे. शा. सं. बाळशास्त्री पुराणिक नागांव इत्येतैर्दत्तं भिन्नपाठान्तरप्रचुरं प्रायः शुद्धम्।

१ वे. शा. सं. नीलकंठशास्त्री (नानाशास्त्री) देवस्थळी सावंतवाडी इत्येतैर्दत्तं पांक्तं सामान्यतः शुद्धम्।

१ वे. रा. रा. मोरेश्वरभट्ट खरे मालवण इत्येतैर्दत्तं व्यवहाराध्यायरहितम्।

१ रा. रा. जनार्दन महादेव गुर्जर मुंबई इत्येतैर्मुद्रितं च।

एतेषां संकलनेन यावन्मनीषं पाठान्तरादिसंयोजनेनच संस्कृतमिदं पुस्तकम्। व्यवहाराध्याये दुरूहत्वमार्जनाय बालंभट्टीव्याख्याधारेण टिप्पणमप्ययोजि। सर्वेषां शीघ्रोपस्थित्यै याज्ञवल्क्यस्मृतिस्थपद्यानां **मातृकाक्रमकोशो**ऽप्यन्ते योजितः। अत्र विद्वद्वरपंडित जीवरामशास्त्रिभिः क्वचन साधकसूचनादिभिस्तथा शोधनकाले वे. शा. सं. महादेवशास्त्री बाक्रे इत्येतैश्च बहूपकृतं तन्नामनिर्देशादृतेऽन्यन्न साधनमुत्ततुं मन्ये। एवं दुरूहविषयसंस्करणसाहसमुररीकृत्यायासबाहुल्येन यथामति शोधितेऽप्यस्मिन्महति ग्रन्थे मानुषशेमुषीसुलभमव्युत्पत्त्यनवधानदृक्चापलाक्षरयोजकादिनियतं स्खलितं दयालवो महाशयाः शोधयेयुरहमपि पुनर्मुद्रणावसरे शोधयेयेति विज्ञापयति—

पणशीकरोपाह्वो

**वासुदेवशर्मा।**

# याज्ञवल्क्यस्मृतिस्थविषयानुक्रमणी ।

## अथाचाराध्यायः १

## वर्णजातिविवेकप्रकरणम् ४



## गृहस्थधर्मप्रकरणम् ५



## स्नातकधर्मप्रकरणम् ६



## भक्ष्याभक्ष्यप्रकरणम् ७

इत्याचाराध्यायः ।

## अथ व्यवहाराध्यायः २

## असाधारणव्यवहारमातृकाप्रकरणम् २

| विषयाः | पृष्ठं |
|---|---|

## प्रायश्चित्ताध्यायः ३

### आशौचप्रकरणम्

## विषयानुक्रमणी ।



### आपद्धर्मप्रकरणम् २



### वानप्रस्थधर्मप्रकरणम् ३

समाप्तेयं याज्ञवल्क्यस्मृतिविषयसूची ।

# याज्ञवल्क्यस्मृतिः ।

## मिताक्षरासंवलिता ।

### उपोद्घातप्रकरणम् १

श्रीगणेशाय नमः ।

धर्माधर्मौ तद्विपाकास्त्रयोऽपि क्लेशाः[2] पञ्च प्राणिनामायतन्ते ।
यस्मिन्नेतैर्नो परामृष्ट ईशो यस्तं वन्दे विष्णुमोंकारवाच्यम् ॥ १ ॥
याज्ञवल्क्यमुनिभाषितं मुहुर्विश्वरूपविकटोक्तिविस्तृतम् ।
धर्मशास्त्रमृजुभिर्मिताक्षरैर्बालबोधविधये विविच्यते ॥ २ ॥

याज्ञवल्क्यशिष्यः कश्चित्प्रश्नोत्तररूपं याज्ञवल्क्यमुनिप्रणीतं धर्मशास्त्रं संक्षिप्य कथयामास । यथा मनुप्रणीतं[3] भृगुः । तस्य चायमाद्यः श्लोकः—

**योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन् ।**
**वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः ॥ १ ॥**

योगिनां सनकादीनामीश्वरः श्रेष्ठस्तं[4] याज्ञवल्क्यं संपूज्य मनोवाक्कायकर्मभिः पूजयित्वा मुनयः सामश्रवःप्रभृतयः[5] श्रवणधारणयोग्या अब्रुवन् उक्तवन्तः धर्मान्नोऽस्मभ्यं ब्रूहीति[6] । कथम् । अशेषतः कार्त्स्न्येन । केषाम् । वर्णाश्रमेतराणाम् । वर्णा ब्राह्मणादयः, आश्रमा ब्रह्मचारिप्रभृतयः, इतरेऽनुलोमप्रतिलोमजाता मूर्धावसिक्तादयः । इतरशब्दस्य 'द्वन्द्वे च' इति सर्वनामसंज्ञाप्रतिषेधः । अत्र च धर्मशब्दः षड्विधस्मार्तधर्मविषयः[7] । तद्यथा—वर्णधर्म आश्रमधर्मो वर्णाश्रमधर्मो गुणधर्मो निमित्तधर्मः साधारणधर्मश्चेति । तत्र वर्णधर्मो ब्राह्मणो नित्यं मद्यं वर्जयेदित्यादिः[8] । आश्रमधर्मोऽग्नीन्धनभैक्षचर्यादिः । वर्णाश्रमधर्मः पालाशो

१ जात्यायुर्भोगा विपाकाः. २ अविद्याऽस्मितारागद्वेषाभिनिवेशाख्याः क्लेशाः । तत्र सम्यगध्यात्मविद्भिर्दर्शितार्थे विपरीतं ज्ञानमविद्या । अहमस्मि मद्विशिष्टः कोपि नास्तीत्यभिमानातिशयोऽस्मिता । विषयेष्वासक्ती रागः । दुःखेष्वप्रीतिर्द्वेषः । अननुभूतादपि मरणादेस्त्रासोऽभिनिवेशः इति. ३ मनुनोक्तं ख. ४ प्रभुस्तं ख. ५ सोमश्रवादयः क. ६ ब्रूहि कथयेति क. ७ स्मार्तकर्मविषयः. ८ वर्जयेदिति क.

दण्डो ब्राह्मणस्येत्येवमादिः। गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापरिपालनादिः। निमित्तधर्मो विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम्। साधारणधर्मोऽहिंसादिः। न हिंस्यात्सर्वाभूतानीत्याचण्डालं साधारणो धर्मः। शौचाचारांश्च शिक्षयेदित्याचार्यकरणविधिप्रयुक्तत्वाद्धर्मशास्त्राध्ययनस्य प्रयोजनादिकथनं नातीवोपयुज्यते। तत्र चायं क्रमः। प्रागुपनयनात्कामचारकामवादकामभक्षाः। ऊर्ध्वमुपनयनात्प्राग्वेदाध्ययनोपक्रमाद्धर्मशास्त्राध्ययनं, ततो धर्मशास्त्रविहितयमनियमोपेतस्य वेदाध्ययनं, ततस्तदर्थजिज्ञासा, ततस्तदर्थानुष्ठानमिति। तत्र यद्यपि धर्मार्थकाममोक्षाः शास्त्रेणानेन प्रतिपाद्यन्ते तथापि धर्मस्य प्राधान्याद्धर्मग्रहणम्। प्राधान्यं च धर्ममूलत्वादितरेषाम्। नच वक्तव्यं धर्ममूलोऽर्थोऽर्थमूलो धर्म इत्यविशेष इति। यतोऽर्थमन्तरेणापि जपतपस्तीर्थयात्रादिना धर्मनिष्पत्तिरर्थलेशोऽपि न धर्ममन्तरेणेति। एवं काममोक्षावपीति ॥१॥

एवं पृष्टः किमुवाचेत्याह—

**मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाब्रवीन्मुनीन्।**
**यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत ॥ २ ॥**

मिथिलानाम नगरी तत्रावस्थितः स याज्ञवल्क्यो योगीश्वरः क्षणं ध्यात्वा कंचित्कालं मनः समाधाय एते श्रवणाधिकारिणो विनयेन पृच्छन्तीति युक्तमेतेभ्यो वक्तुमित्युक्तवान्मुनीन्। किम्। यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधतेति। कृष्णसारो मृगो यस्मिन्देशे स्वच्छन्दं विहरति तस्मिन्देशे वक्ष्यमाणलक्षणा धर्मा अनुष्ठेया नान्यत्रेत्यभिप्रायः ॥ २ ॥

शौचाचारांश्च शिक्षयेदित्याचार्यस्य धर्मशास्त्राध्यापनविधिः। शिष्येण तदध्ययनं कर्तव्यमिति कुतोऽवगम्यत इत्यत आह—

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ३ ॥**

पुराणं ब्राह्मादि। न्यायस्तर्कविद्या। मीमांसा वेदवाक्यविचारः। धर्मशास्त्रं मानवादि। अङ्गानि व्याकरणादीनि षट्। एतैरेताश्चत्वारो वेदाः। विद्याः पुरुषार्थसाधनानि। तासां स्थानानि च चतुर्दश। धर्मस्य च चतुर्दश स्थानानि हेतवः। एतानि च त्रैवर्णिकैरध्येतव्यानि तदन्तर्भूतत्वाद्धर्मशास्त्रमप्यध्येतव्यम्। तत्रैतानि ब्राह्मणेन विद्याप्राप्तये धर्मानुष्ठानाय चाधिगन्तव्यानि। क्षत्रियवैश्याभ्यां धर्मानुष्ठानाय। तथाच शङ्खेन विद्यास्थानान्युपक्रम्योक्तम्— 'एतानि ब्राह्मणोऽधिकुरुते सच वृत्तिं दर्शयतीतरेषाम्' इति। मनुरपि द्विजा-

१ अयमेवपाठो युक्तः। सर्वभूतानि इति ख. पाठः. २ श्रुत्युक्तशौचाचारान् ख. ३ जपतीर्थयात्रा क. ख. ४ पुरुषार्थज्ञानानि क. पुरुषार्थसाधनज्ञानानि ख. ५ तदन्तर्गतत्वात् क. ६ तत्र ब्राह्मणेनैतानि क.

तीनां धर्मशास्त्राध्ययनेऽधिकारो ब्राह्मणस्य प्रवचने नान्यस्येति दर्शयति (२।१६)—'निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः। तस्य शास्त्रेऽधिकारोऽस्मिञ्ज्ञेयो नान्यस्य कर्हिचित्॥ विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः। शिष्येभ्यश्च प्रवक्तव्यं सम्यङ्नान्येन केनचित्॥' इति॥ ३॥

अस्तु धर्मशास्त्रमध्येतव्यं, याज्ञवल्क्यप्रणीतस्यास्य शास्त्रस्य किमायातमित्यत आह—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती॥ ४॥
पराशरव्यासशङ्खलिखिता[१] दक्षगौतमौ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः[२]॥ ५॥

उशनःशब्दपर्यन्तो द्वन्द्वैकवद्भावः। याज्ञवल्क्यप्रणीतमिदं धर्मशास्त्रमध्येतव्यमित्यभिप्रायः। नेयं परिसंख्या[३] किंतु प्रदर्शनार्थमेतत्। अतो बौधायनादेरपि धर्मशास्त्रत्वमविरुद्धम्। एतेषां प्रत्येकं प्रामाण्येऽपि साकाङ्क्षाणामाकाङ्क्षापरिपूरणमन्यतः क्रियते विरोधे[४] विकल्पः॥ ४॥ ५॥

इदानीं धर्मस्य कारकहेतूनाह—

देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम्।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम्॥ ६॥

देशो यस्मिन्देशे मृगः कृष्ण इत्युक्तलक्षणः। कालः संक्रान्त्यादिः। उपायः शास्त्रोक्तेतिकर्तव्यताकलापः। द्रव्यं प्रतिग्रहादिलब्धं गवादि। श्रद्धा आस्तिक्यबुद्धिस्तदन्वितं यथा भवति तथा। पात्रं न विद्ययेत्येवमादिवक्ष्यमाणलक्षणम्। प्रदीयते यथा न प्रत्यावर्तते तथा परस्वत्वापत्त्यवसानं त्यज्यते। एतद्धर्मस्योत्पादकम्। किमेतावदेव नेत्याह—सकलमिति। अन्यदपि शास्त्रोक्तं जातिगुणहोमयागादि तत्सकलं धर्मस्य कारकं, जातिगुणद्रव्यक्रियाभावार्थात्मकं चतुर्विधं धर्मस्य कारकमित्युक्तं भवति। तच्च समस्तं व्यस्तं वा यथाशास्त्रं द्रष्टव्यम्। श्रद्धा सर्वत्रानुवर्तत एव॥ ६॥

इदानीं धर्मस्य ज्ञापकहेतूनाह—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम्॥ ७॥

श्रुतिर्वेदः। स्मृतिर्धर्मशास्त्रम्। तथाच मनुः (२।१०) 'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः' इति। सदाचारः सतां शिष्टानामाचारोऽनुष्ठानम्[५]। स्वस्य

---

१ कस्यचित् क. ख. २ प्रवर्तकाः इति क. पाठः. ३ परिसंख्यानाम एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनम्। एतद्विस्तरोऽग्रे ८१ श्लोकमिताक्षरायां द्रष्टव्यः. ४ विरोधे तु ख. ५ नुष्ठानं नाशिष्टानाम् ख.

चात्मनः प्रियं, वैकल्पिके विषये यथा 'गर्भाष्टमेऽष्टमे वाब्दे' इत्यादावात्मेच्छैव[1] नियामिका। सम्यक्संकल्पाज्जातः कामः शास्त्राविरुद्धो[2] यथा 'मया भोजनव्यतिरेकेणोदकं न पातव्यम्' इति। एते धर्मस्य मूलं प्रमाणम्। एतेषां विरोधे पूर्वपूर्वस्य बलीयस्त्वम् ॥ ७ ॥

देशादिकारकहेतूनामपवादमाह—

इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ ८ ॥

इज्यादीनां कर्मणामयमेव परमो धर्मः यद्योगेन बाह्यचित्तवृत्तिनिरोधेनात्मनो दर्शनं याथात्म्यज्ञानम् । योगेनात्मज्ञाने देशादिनियमो नास्तीत्यर्थः। तदुक्तं 'यत्रैकाग्रता तत्राविशेषात्' इति पातञ्जलैः ॥ ८ ॥

कारकहेतुषु ज्ञापकहेतुषु वा संदेहे निर्णयहेतूनाह—

चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥ ९ ॥

चत्वारो ब्राह्मणाः वेदधर्मशास्त्रज्ञाः[3] पर्षत् । तिस्रो विद्या अधीयन्त इति त्रैविद्यास्तेषां समूहस्त्रैविद्यम्। धर्मशास्त्रज्ञत्वमत्राप्यनुवर्तते तद्वा पर्षत्। सा पूर्वोक्ता पर्षत् यं ब्रूते स धर्मः। अध्यात्मज्ञानेषु निपुणतमो धर्मशास्त्रज्ञश्च[4] एकोऽपि वा यं ब्रूते सोऽपि धर्म एव[5] ॥ ९ ॥

इत्युपोद्घातप्रकरणम् ।

## अथ ब्रह्मचारिप्रकरणम् २

एतैर्नवभिः श्लोकैः सकलशास्त्रोपोद्घातमुक्त्वा इदानीं वर्णादीनां धर्मान्वक्तुं प्रथमं तावद्वर्णानाह—

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥ १० ॥

ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा वक्ष्यमाणलक्षणास्तेषामाद्यास्त्रयो ब्राह्मणक्षत्रियवैश्या द्विजाः द्विर्जायन्त इति द्विजाः तेषां द्विजानां वै एव न शूद्रस्य[6]। निषेकाद्याः निषेको गर्भाधानमाद्यो यासां तास्तथोक्ताः । श्मशानं पितृवनं तत्संबन्धि कर्म अन्ते[7] यासां ताः क्रिया मन्त्रैर्भवन्ति ॥ १० ॥

इदानीं ताः क्रिया अनुक्रामति—

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा ।

१ इत्यत्रात्मेच्छैव, इत्यादिष्वात्मेच्छैव ख. २ शास्त्राविरुद्धः कामो यथा ख. ३ वेदशास्त्रधर्मज्ञाः ख. ४ वेदधर्मशास्त्रज्ञश्च ख. ५ सोपि धर्मः ख. ६ न शूद्राणां क. ७ अन्तो क.

षष्ठेऽष्टमे वा सीमन्तो मास्यन्ते जातकर्म च ॥ ११ ॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः।
षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ॥ १२ ॥

गर्भाधानमित्यनुगतार्थं कर्मनामधेयम्। एवं वक्ष्यमाणान्यपि। तद्गर्भाधानमृतौ ऋतुकाले वक्ष्यमाणलक्षणे। पुंसवनाख्यं कर्म गर्भचलनात्पूर्वम्। षष्ठेऽष्टमे वा मासि सीमन्तोन्नयनम्। एतेच पुंसवनसीमन्तोन्नयने क्षेत्रसंस्कारकर्मत्वात्सकृदेव कार्ये न प्रतिगर्भम्। यथाह देवलः—'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता। यं यं गर्भं प्रसूयेत स सर्वः संस्कृतो भवेत्' इति। यद्वा एते आ इते आगते गर्भकोशाज्जाते कुमारे[1] जातकर्म। एकादशेऽहनि नाम[2]। तच्च पितामहमातामहादिसंबद्धं कुलदेवतासंबद्धं वा। यथाह शङ्खः—'कुलदेवतासंबद्धं पिता नाम कुर्यात्' इति। चतुर्थे मासि निष्क्रमलक्षणं सूर्यावेक्षणं कर्म। षष्ठे मास्यन्नप्राशनं कर्म। चूडाकरणं तु यथाकुलं। कार्यमिति प्रत्येकं संबध्यते ॥ ११ ॥ १२ ॥

एतेषां नित्यत्वेप्यानुषङ्गिकं फलमाह—

एवमेनः शमं याति बीजगर्भसमुद्भवम्।

एवमुक्तेन प्रकारेण गर्भाधानादिभिः संस्कारकर्मभिः कृतैरेनः पापं शमं याति। किंभूतम्। बीजगर्भसमुद्भवं शुक्रशोणितसंबद्धं गात्रव्याधिसंक्रान्तिनिमित्तं वा नतु पतितोत्पन्नत्वादि ॥

स्त्रीणां विशेषमाह—

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥ १३ ॥

एता जातकर्मादिकाः क्रियाः स्त्रीणां तूष्णीं विनैव मन्त्रैर्यथाकालं कार्याः। विवाहः पुनः समन्त्रकः कार्यः ॥ १३ ॥

उपनयनकालमाह—

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १४ ॥

गर्भाधानमादिं[3] कृत्वा जननं वाष्टमे वर्षे ब्राह्मणस्योपनायनं उपनयनमेवोपनायनम्। स्वार्थे अण् वृत्तानुसारात्[4] छन्दोभङ्गात् आर्षं वा दीर्घत्वम्। अत्रेच्छया विकल्पः। राज्ञामेकादशे। विशां वैश्यानां सैके एकादशे। द्वादश इत्यर्थः। गर्भग्रहणं सर्वत्रानुवर्तते। समासे गुणभूतस्यापि गर्भशब्दस्य बुद्ध्या विभज्योभयत्राप्यनुवर्तनं कार्यम्। 'गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः' इति स्मृत्यन्तरदर्शनात्[5]। यथा अथ शब्दानुशासनं[6] केषां शब्दानां लौकिकानां वैदिकानामिति। अत्रापि कार्यमित्यनुवर्तते। कुलस्थित्या केचिदुपनयनमिच्छन्ति ॥ १४ ॥

---

१ कुमारे जाते ख. २ नामकरणम् ख. ३ अवधिं कृत्वा जन्मनो ख. ४ प्रकरणानुसारात् क. ५ वचनात् ख. ६ शब्दानामिति क.

गुरुधर्मानाह—

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ १५ ॥

स्वगृह्योक्तविधिनोपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकं वेदमध्यापयेत् । महाव्याहृतयश्च भूरादिसत्यान्ताः सप्त । पञ्च वा गौतमाभिप्रायेण । किंच शौचाचारांश्च वक्ष्यमाणलक्षणान् शिक्षयेत् । उपनीय शौचाचारांश्च शिक्षयेदित्यनेन प्रागुपनयनात्कामचारो दर्शितः । वर्णधर्मान्वर्जयित्वा स्त्रीणामप्येतत्समानं विवाहादर्वाक्, उपनयनस्थानीयत्वाद्विवाहस्य ॥ १५ ॥

शौचाचारानाह—

दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥ १६ ॥

कर्णस्थं ब्रह्मसूत्रं यस्य स तथोक्तः । कर्णश्च दक्षिणः । 'पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेत्' इति लिङ्गात् । असावहनि संध्ययोश्च उदङ्मुखो मूत्रपुरीषे कुर्यात् । चकाराद्भस्मादिरहिते देशे । रात्रौ तु दक्षिणामुखः ॥ १६ ॥

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ १७ ॥

किंच अनन्तरं शिश्नं गृहीत्वोत्थायोद्धृताभिरद्भिर्वक्ष्यमाणलक्षणाभिर्मृद्भिश्च गन्धलेपयोः क्षयकरं शौचं कुर्यात् । अतन्द्रितोऽनलसः । उद्धृताभिरद्भिरिति जलान्तः शौचनिषेधः । अत्र गन्धलेपक्षयकरमिति सर्वाश्रमिणां साधारणमिदं शौचम्[२] । मृत्संख्यानियमस्त्वदृष्टार्थः ॥ १७ ॥

अन्तर्जानुः शुचौ देश उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ १८ ॥

शुचौ अशुचिद्रव्यासंस्पृष्टे । देश इत्युपादानादुपानच्छयनासनादिनिषेधः । उपविष्टो न स्थितः शयानः प्रह्वो गच्छन्वा । उदङ्मुखः प्राङ्मुखो वेति दिगन्तरनिवृत्तिः । शुचौ देश इत्येतस्मात्पादप्रक्षालनप्राप्तिः । ब्राह्मेण तीर्थेन वक्ष्यमाणलक्षणेन । द्विजो न शूद्रादिः । नित्यं सर्वकालमाश्रमान्तरगतोऽपि । उपस्पृशेदाचामेत् । कथम् । अन्तर्जानुः-जानुनोर्मध्ये हस्तौ कृत्वा दक्षिणेन हस्तेनेति ॥ १८ ॥

प्राजापत्यादितीर्थान्याह—

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १९ ॥

---

१ शिष्यं गुरुः ख. २ शौचमिदं ख. ३ इत्युपानत् क.

कनिष्ठायास्तर्जन्या अङ्गुष्ठस्य च मूलानि करस्याग्रं च प्रजापतिपितृब्रह्मदेवतीर्थानि यथाक्रमं वेदितव्यानि ॥ १९ ॥

आचमनप्रकारः—

त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ २० ॥

वारत्रयमपः पीत्वा मुखमङ्गुष्ठमूलेन द्विरुन्मृज्य खानि छिद्राणि ऊर्ध्वकायगतानि प्राणादीनि अद्भिरुपस्पृशेत् । अद्भिर्द्रव्यान्तरासंसृष्टाभिः[1] । पुनरद्भिरित्यब्ग्रहणं[2] प्रतिच्छिद्रमुदकस्पर्शनार्थम् स्मृत्यन्तरात्—'अङ्गुष्ठेन प्रदेशिन्या घ्राणं चैव मुखं स्पृशेत् । अङ्गुष्ठानामिकाभ्यां च चक्षुःश्रोत्रं पुनः पुनः ॥ कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै । सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥' इति । पुनस्ता एव विशिनष्टि । प्रकृतिस्थाभिः गन्धरूपरसस्पर्शान्तरमप्राप्ताभिः । फेनबुद्बुदरहिताभिः । तुशब्दाद्वर्षधारागतानां शूद्राद्यावर्जितानां च निषेधः ॥ २० ॥

हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।
शुध्येरंस्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ २१ ॥

हृत्कण्ठतालुगाभिरद्भिर्यथाक्रमेण द्विजायतः शुध्यन्ति । स्त्री च शूद्रश्च अन्ततः अन्तर्गतेन[3] तालुना स्पृष्टाभिरपि । सकृदिति वैश्याद्विशेषः । चशब्दादनुपनीतोऽपि ॥ २१ ॥

स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।
सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ २२ ॥

प्रातःस्नानं यथाशास्त्रमब्दैवतैर्मन्त्रैरापोहिष्ठेत्येवमादिभिर्मार्जनम् । प्राणसंयमः प्राणायामो वक्ष्यमाणलक्षणः । ततः सूर्यस्योपस्थानं सौरमन्त्रेण । गायत्र्यास्तत्सवितुर्वरेण्यमित्याद्यायाः[4] प्रतिदिवसं जपः[5] । कार्यशब्दो यथालिङ्गं प्रत्येकमभिसंबध्यते ॥ २२ ॥

प्राणायामविचारः-

गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ २३ ॥

गायत्रीं पूर्वोक्तामापोज्योतिरित्यादिना शिरसा संयुक्तां उक्तव्याहृतिपूर्विकां प्रतिव्याहृति प्रणवेन संयुक्तां ॐभूः ॐभुवः ॐस्वरिति त्रीन्वारान्मुखनासिकासंचारिवायुं निरुन्धन् मनसा जपेदित्ययं सर्वत्र प्राणायामः ॥ २३ ॥

सावित्रीजपप्रकारः—

प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु ।
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥ २४ ॥

---

१ संसृष्टाभिः क. ग. २ पुनरब्ग्रहणं क. ३ अन्तेन ख. ४ मित्यादेः ख. ५ जपः कार्यः ख.

संध्यां प्राक्प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ।

प्राणायामं पूर्वोक्तं कृत्वा तृचेनाब्दैवतेन पूर्वोक्तेनात्मानमद्भिः संप्रोक्ष्य सावित्रीं जपन्प्रत्यक्संध्यामासीत । अर्थात्प्रत्यङ्मुख इति लभ्यते । आतारकोदयात् तारकोदयावधि । प्राक्संध्यां प्रातःसमये । एवं पूर्वोक्तविधिमाचरन्प्राङ्मुखः सूर्योदयावधि तिष्ठेत् । अहोरात्रयोः संधौ या क्रिया विधीयते सा संध्या । तत्र अहः संपूर्णादित्यमण्डलदर्शनयोग्यः कालः । तद्विपरीता रात्रिः । यस्मिन्काले खण्डमण्डलस्योपलब्धिः स संधिः ॥ २४ ॥

अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि ॥ २५ ॥

ततः संध्योपासनानन्तरं द्वयोः संध्ययोरग्निकार्यं अग्नौ कार्यं समित्प्रक्षेपादि यत्तत्कुर्यात् स्वगृह्योक्तेन विधिना ॥ २५ ॥

ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ।

तदनन्तरं वृद्धान्गुरुप्रभृतीनभिवादयेत् । कथम् । असौ देवदत्तशर्माहमिति स्वं नाम कीर्तयन् ॥

गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ २६ ॥
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ।
हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः ॥ २७ ॥

तथा गुरुं वक्ष्यमाणलक्षणमुपासीत तत्परिचर्यापरस्तदधीनस्तिष्ठेत् । स्वाध्यायार्थमध्ययनसिद्ध्ये समाहितोऽविक्षिप्तचित्तो भवेत् । आहूतश्चाप्यधीयीत गुर्वाहूत एवाधीयीत न स्वयं गुरुं प्रेरयेत् । यच्च लब्धं तत्सर्वं गुरवे निवेदयेत् । तथा तस्य गुरोर्हितमाचरेत् नित्यं सदा । मनोवाक्कायकर्मभिः न प्रतिकूलं कुर्यात् । अपिशब्दाद्गुरुदर्शने गौतमोक्तं कण्ठप्रावृतादि वर्जयेत् ॥ २६ ॥ २७ ॥

अध्याप्यानाह—

कृतज्ञाद्रोहिमेधाविशुचिकल्पानसूयकाः ।
अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥ २८ ॥

कृतमुपकारं न विस्मरतीति कृतज्ञः । अद्रोही दयावान् । मेधावी ग्रन्थग्रहणधारणशक्तः । शुचिर्बाह्याभ्यन्तरशौचवान् । कल्प आधिव्याधिरहितः । अनसूयको दोषानाविष्कारेण गुणाविष्करणशीलः । साधुर्वृत्तवान् । शक्तः शुश्रूषायाम् । आप्तो बन्धुः । ज्ञानदो विद्याप्रदः । वित्तदोऽर्पणपूर्वकमर्थप्रदाता । एते गुणाः समस्ता व्यस्ताश्च यथासंभवं द्रष्टव्याः । एते च धर्मतः शास्त्रानुसारेणाध्याप्याः ॥ २८ ॥

दण्डादिधारणमाह-

दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ।

---

१ मुपासीत. ग. २ लब्धं तस्मै इति ख. ३ नाविष्करणेन ख. ४ एणो वेतनभाषाबन्धस्तद्रहितं. अर्पणपूर्वकं ख. ग.

तथा स्मृत्यन्तरप्रसिद्धं पालाशादिदण्डं, अजिनं कार्ष्णादि, उपवीतं कार्पासादिनिर्मितं, मेखलां च मुञ्जादिनिर्मितां ब्राह्मणादिर्ब्रह्मचारी धारयेत् ॥

भैक्षचर्याप्रकारः—

**ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये ॥ २९ ॥**
**आदिमध्यावसानेषु भवच्छब्दोपलक्षिता।**
**ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ॥ ३० ॥**

पूर्वोक्तदण्डादियुक्तो ब्रह्मचारी ब्राह्मणेष्वनिन्द्येषु अभिशस्तादिव्यतिरिक्तेषु स्वकर्मनिरतेषु भैक्षं चरेत्। आत्मवृत्तये आत्मनो जीवनाय न परार्थं आचार्यतद्भार्यापुत्रव्यतिरेकेण। निवेद्य गुरवे तदनुज्ञातो भुञ्जीत। तदभावे तत्पुत्रादाविति नियमात्। अत्रच ब्राह्मणग्रहणं संभवे सति नियमार्थम्। यत्तु सार्ववर्णिकं भैक्षचरणमिति तत्त्रैवर्णिकविषयम्। यच्च चातुर्वर्ण्यं चरेद्भैक्षमिति तदापद्विषयम्। कथं भैक्षचर्या कार्या। आदिमध्यावसानेषु भवच्छब्दोपलक्षिता। भवति भिक्षां देहि। भिक्षां भवति देहि। भिक्षां देहि भवति इत्येवं वर्णक्रमेण भैक्षचर्या कार्या ॥ २९ ॥ ३० ॥

भोजनप्रकारः—

**कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया।**
**अपोशनक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥ ३१ ॥**

पूर्वोक्तेन विधिना भिक्षामाहृत्य गुरवे निवेद्य तदनुज्ञया कृताग्निकार्यो वाग्यतो मौनी अन्नं सत्कृत्य संपूज्य अकुत्सयन्ननिन्दन् अपोशनक्रियां अमृतोपस्तरणमसीत्यादिकां पूर्वं कृत्वा भुञ्जीत। अत्र पुनरग्निकार्यग्रहणं संध्याकाले कथंचिदकृताग्निकार्यस्य कालान्तरविधानार्थं न पुनस्तृतीयग्राह्यर्थम् ॥ ३१ ॥

**ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि।**
**ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ ३२ ॥**

ब्रह्मचर्ये स्थित एकान्नं नाद्यादनापदि व्याध्याद्यभावे। ब्राह्मणः पुनः श्राद्धेऽभ्यर्थितः सन् काममश्नीयात्। व्रतमपीडयन् मधुमांसपरिहारेण। अत्र ब्राह्मणग्रहणं क्षत्रियादेः श्राद्धभोजनव्युदासार्थम्। 'राजन्यवैश्ययोश्चैव नैतत्कर्म प्रचक्षते' इति स्मरणात् ॥ ३२ ॥

मधुमांसादिवर्ज्यान्याह—

**मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम्।**
**भास्करालोकनाश्लीलपरिवादादि वर्जयेत् ॥ ३३ ॥**

१ कार्ष्णाजिनादि ख. २ दिदोषरहितेषु ख. ३ सति। न नियमार्थं ख. ४ त्रैवर्णिकप्राप्त्यर्थम् ख. ५ कालान्तरं मध्याह्नादि. ६ एकान्नमेकस्वामिकम्. ७ कामं यथेष्टम्.

मधु क्षौद्रं न मद्यम्। तस्य 'नित्यं मद्यं ब्राह्मणो वर्जयेत्' इति निषेधात्। मांसं छागादेरपि। अञ्जनं घृतादिना गात्रस्य, कज्जलादिना चाक्ष्णोः। उच्छिष्टमगुरोः। शुक्तं निष्ठुरवाक्यं नान्नरसः, तस्याभक्ष्यप्रकरणे निषेधात्। स्त्रियमुपभोगे। प्राणिहिंसनं जीववधः। भास्करस्योदयास्तमयावलोकनम्। अश्लीलमसत्यभाषणम्। परिवादः सदसद्रूपस्य परदोषस्य ख्यापनम्। आदिशब्दात्स्मृत्यन्तरोक्तं गन्धमाल्यादि गृह्यते। एतानि ब्रह्मचारी वर्जयेत्॥ ३३॥

गुर्वाचार्यादिलक्षणमाह—

स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।
उपनीय दद्वेदमाचार्यः स उदाहृतः॥ ३४॥

योसौ गर्भाधानाद्या उपनयनपर्यन्ताः क्रिया यथाविधि कृत्वा वेदमस्मै ब्रह्मचारिणे प्रयच्छति स गुरुः। यः पुनरुपनयनमात्रं कृत्वा वेदं प्रयच्छति स आचार्यः॥ ३४॥

उपाध्यायादिलक्षणम्—

एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते।
एते मान्या यथापूर्वमेभ्यो माता गरीयसी॥ ३५॥

वेदस्यैकदेशं मन्त्रब्राह्मणयोरेकं अङ्गानि वा योऽध्यापयति स उपाध्यायः। यः पुनः पाकयज्ञादिकं वृतः करोति स ऋत्विक्। एते च गुर्वाचार्योपाध्यायर्त्विजो यथापूर्वं यथाक्रमेण मान्याः पूज्याः। एभ्यः सर्वेभ्यो माता गरीयसी पूज्यतमा॥ ३५॥

वेदग्रहणार्थं ब्रह्मचर्यावधिमाह—

प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा।
ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे॥ ३६॥

यदा विवाहासंभवे वेदानधीत्य वेदौ वा वेदं वेति प्रवर्तते तदा प्रतिवेदं वेदंवेदं प्रति ब्रह्मचर्यं पूर्वोक्तं द्वादशवर्षाणि कार्यम्। अशक्तौ पञ्च। ग्रहणान्तिकमित्येके वर्णयन्ति। केशान्तः पुनर्गोदानाख्यं कर्म गर्भादारभ्य षोडशे वर्षे ब्राह्मणस्य कार्यम्। एतच्च द्वादशवार्षिके वेदव्रते बोद्धव्यं इतरस्मिन्पक्षे यथासंभवं द्रष्टव्यम्। राजन्यवैश्ययोस्तूपनयनकालवद्द्वाविंशे चतुर्विंशे वा द्रष्टव्यम्॥ ३६॥

उपनयनकालस्य परमावधिमाह—

आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥ ३७॥

---

१ न रसादि क. २ भास्करस्य चालोकनं क. ३ गुह्यभाषणं ख. ४ ददाति ख. ५ गावः केशा दीयन्ते खण्ड्यन्ते यस्मिन्. ६ वा यथासंभवं ख.

अतऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ ३८ ॥

आषोडशाद्वर्षात्षोडशवर्षं यावत् आद्वाविंशादाचतुर्विंशाद्वर्षाद्ब्रह्मक्षत्रविशां औपनायनिकः उपनयनसंबन्धी परः कालः। नातःपरमुपनयनकालोऽस्ति किंतु अतऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः सर्वधर्मेष्वनधिकारिणो भवन्ति। सावित्रीपतिताः पतितसावित्रीका भवन्ति। सावित्रीदानयोग्या न भवन्ति। व्रात्याः संस्कारहीनाश्च व्रात्यस्तोमात्क्रतोर्विना। कृते तु तस्मिन्नुपनयनाधिकारिणो भवन्ति ॥ ३७ ॥ ३८ ॥

आद्यास्त्रयो द्विजा इत्युक्तं तत्र हेतुमाह—

मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥ ३९ ॥

मातुः सकाशात्प्रथमं जायन्ते, मौञ्जिबन्धनाच्च द्वितीयं जन्म यस्मात्तस्मादेते ब्राह्मणक्षत्रियवैश्या द्विजा उच्यन्ते ॥ ३९ ॥

वेदग्रहणाध्ययनफलमाह—

यज्ञानां तपसां चैव शुभानां चैव कर्मणाम्।
वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ ४० ॥

यज्ञानां श्रौतस्मार्तानां, तपसां कायसंतापरूपाणां चान्द्रायणादीनां, शुभानां च कर्मणां उपनयनादिसंस्काराणां अवबोधकत्वेन वेदएव द्विजातीनां परो निःश्रेयसकरो नान्यः। वेद एवेति तन्मूलकत्वेन स्मृतेरप्युपलक्षणार्थम् ॥ ४० ॥

ग्रहणाध्ययनफलमुक्त्वेदानीं काम्यब्रह्मयज्ञाध्ययनफलमाह—

मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः।
पितॄन्मधुघृताभ्यां च ऋचोऽधीते हि योऽन्वहम् ॥ ४१ ॥
यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः।
प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा ॥ ४२ ॥
स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत्।
सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ४३ ॥

योऽन्वहमृचोऽधीते स मधुना पयसा च देवान्पितॄंश्च मधुघृताभ्यां तर्पयति। यः पुनः शक्तितोऽन्वहं यजूंष्यधीते स घृतामृतैर्देवान्पितॄंश्च मधुघृताभ्यां तर्पयति। यस्तु सामान्यन्वहमधीते स सोमघृतैर्देवान्पितॄंश्च मधुसर्पिर्भ्यां प्रीणाति। ऋगादिग्रहणं सामान्येन ऋगादिर्मात्रप्राप्त्यर्थम् ॥ ४१ ॥ ४२ ॥ ४३ ॥

---

१ यथाकालमसंस्कृताः इति अपरा. पाठः. २ ब्राह्मणक्षत्रियविशां ख. ३ व्रात्यस्तोमो नाम व्रात्यानां प्रायश्चित्तक्रतुः। तेन चोद्दालकव्रतादिप्रायश्चित्तान्तरमप्युपलक्ष्यते. अपरार्कः. ४ करो मोक्षकरो ख. ५ काम्यव्रत ख. ६ च यो ख. ७ प्रीणयति क. ८ मन्त्रप्राप्त्यर्थं ख.

मेदसा तर्पयेद्देवानथर्वाङ्गिरसः पठन् ।
पितृंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥ ४४ ॥
वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः ।
इतिहासांस्तथा विद्याः शक्त्याधीते हि योऽन्वहम् ॥४५॥
मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् ।
करोति तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ४६ ॥
ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ।

यः पुनः शक्तितोऽन्वहं अथर्वाङ्गिरसोऽधीते स देवान्मेदसा पितृंश्च मधुसर्पिर्भ्यां तर्पयति । यस्तु वाकोवाक्यं प्रश्नोत्तररूपं वेदवाक्यम् । पुराणं ब्राह्मादि । चकारान्मानवादिधर्मशास्त्रम् । नाराशंसीश्च रुद्रदैवत्यान्मन्त्रान् । गाथा यज्ञगाथेन्द्रगाथाद्याः । इतिहासान्महाभारतादीन् । विद्याश्च वारुण्याद्याः शक्तितोऽन्वहमधीते स मांसक्षीरौदनमधुसर्पिर्भिर्देवान् पितृंश्च मधुसर्पिर्भ्यां तर्पयति ॥ ४४ ॥ ४५ ॥ ४६ ॥ ते पुनस्तृप्ताः सन्तो देवाः पितरश्च एनं स्वाध्यायकारिणं सर्वकामफलैः शुभैरनन्योपघातलक्षणैस्तर्पयन्ति ॥

प्रशंसार्थमाह—

यं यं क्रतुमधीते[२] च तस्य तस्याप्नुयात्फलम् ॥ ४७ ॥
त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ।
[३]तपसश्च परस्येह नित्यस्वाध्यायवान्द्विजः ॥ ४८ ॥

यस्य यस्य क्रतोः प्रतिपादकं वेदैकदेशमन्वहमधीते तस्य तस्य क्रतोः फलमवाप्नोति । तथा वित्तपूर्णायाः पृथिव्याः त्रिः त्रिवारं दानस्य यत्फलं परस्य तपसश्चान्द्रायणादेर्यत्फलं तदपि नित्यस्वाध्यायवानाप्नोति । नित्यग्रहणं काम्यस्यापि सतो नित्यत्वज्ञापनार्थम् ॥ ४७ ॥ ४८ ॥

एवं सामान्येन ब्रह्मचारिधर्मानभिधायाधुना नैष्ठिकस्य विशेषमाह—

नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसंनिधौ[६] ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ ४९ ॥
अनेन विधिना देहं साधयन्विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति न चेह जायते पुनः ॥ ५० ॥

उक्तेन[४] प्रकारेणात्मानं निष्ठां उत्क्रान्तिकालं नयतीति नैष्ठिकः स यावज्जीवमाचार्यसमीपे वसेत् । न वेदग्रहणोत्तरकालं[५] स्वतन्त्रो भवेत् । तदभावे तत्पुत्रसमीपे तदभावे तद्भार्यासमीपे तदभावे वैश्वानरेपि । अनेनोक्तविधिना देहं साधयन्

---

१ यथा— पृच्छामि त्वा परमन्तं पृथिव्याः इति प्रश्नः, इयं वेदिः परो अन्तः इत्युत्तरम्. एवमन्यदपि वाकोवाक्यं ज्ञेयम्. २ मधीतेऽसौ ख. ३ तपसो यत्परस्य ख. ४ अनेनोक्तप्रकारेण. ख. ५ ग्रहणकालोत्तरं ख. ६ स्वोपास्याग्निसंनिधौ ख.

क्षपयन् विजितेन्द्रियः इन्द्रियजये विशेषप्रयत्नवान्ब्रह्मचारी ब्रह्मलोकममृतत्वमाप्नोति। न कदाचिदिह पुनर्जायते ॥ ४९ ॥ ५० ॥

इति ब्रह्मचारिप्रकरणम्।

## अथ विवाहप्रकरणम् ३

यः पुनर्विवाहार्थी तस्य विवाहार्थं स्नानमाह—

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥ ५१ ॥

पूर्वोक्तेन न्यायेन वेदं मन्त्रब्राह्मणात्मकम्। व्रतानि ब्रह्मचारिधर्माननुक्रान्तानुभयं वा पारं नीत्वा समाप्य गुरवे पूर्वोक्ताय वरमभिलषितं यथाशक्ति दत्त्वा स्नायात्। अशक्तौ तदनुज्ञया अदत्तवरोऽपि। एषां च पक्षाणां शक्तिकालाद्यपेक्षया व्यवस्था ॥ ५१ ॥

स्नानानन्तरं किं कुर्यादित्यत आह—

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ ५२ ॥

अविप्लुतब्रह्मचर्योऽस्खलितब्रह्मचर्यः। लक्षण्यां बाह्याभ्यन्तरलक्षणैर्युक्ताम्। बाह्यानि 'तनुलोमकेशदशनाम्' इत्यादीनि (३।१०) मनुनोक्तानि[1]। आभ्यन्तराणि 'अष्टौ पिण्डान्कृत्वा' इत्याद्याश्वलायनोक्तविधिना ज्ञातव्यानि[2]। स्त्रियं नपुंसकत्वनिवृत्तये स्त्रीत्वेन परीक्षिताम्। अनन्यपूर्विकां दानेनोपभोगेन वा पुरुषान्तरापरिगृहीताम्। कान्तां कमनीयां वोढुर्मनोनयनानन्दकारिणीम्। 'यस्यां मनश्चक्षुषोर्निर्बन्धस्तस्यामृद्धिः' इत्यापस्तम्बस्मरणात्। एतच्च न्यूनाधिकाङ्गादिबाह्यदोषाभावे। असपिण्डां समान एकः पिण्डो देहो यस्याः सा सपिण्डा न सपिण्डा असपिण्डा ताम्। सपिण्डता च एकशरीरावयवान्वयेन भवति। तथाहि पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह[3]। एवं पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात्। एवं मातृशरीरावयवान्वयेन मात्रा। तथा मातामहादिभिरपि मातृद्वारेण। तथा मातृष्वसृमातुलादिभिरप्येकशरीरावयवान्वयात्। तथा पितृव्यपितृष्वस्रादिभिरपि। तथा पत्न्यासह पत्न्या एकशरीरारम्भकतया। एवं भ्रातृभार्याणामपि परस्परमेकशरीरारब्धैः[4]

---

१ केशादीनि मनुप्रोक्तानि क. २ तानिच—पूर्वस्यां रात्रौ गोष्ठवल्मीककितवस्थानह्रदेरिणक्षेत्रचतुष्पथश्मशानेभ्यो मृत्तिकां गृहीत्वा पिण्डाष्टकं कर्तव्यम्। तत्रानुक्रमेण प्रथमे पिण्डे स्पृष्टे धान्यवती भवेत्। द्वितीये स्पृष्टे पशुमती भवेत्। तृतीयेऽग्निहोत्रशुश्रूषणपरा भवति। चतुर्थे विवेकिनी चतुरा सर्वजनार्जनपरा भवति। पञ्चमे रोगिणी। षष्ठे वन्ध्या। सप्तमे व्यभिचारिणी। अष्टमे विधवा भवेदित्याश्वलायनोक्तानि. ३ सह सापिण्ड्यं ख. ४ एकशरीरारम्भैः क.

सहैकशरीरारम्भकत्वेन । एवं यत्र यत्र सपिण्डशब्दस्तत्र तत्र साक्षात्परम्परया वा एकशरीरावयवान्वयो वेदितव्यः । यद्येवं मातामहादीनामपि 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' इत्यविशेषेण प्राप्नोति । स्यादेतत् यदि तत्र 'प्रत्तानामितरे कुर्युः' इत्यादिविशेषवचनं न स्यात् । अतश्च सपिण्डेषु यत्र विशेषवचनं नास्ति तत्र 'दशाहं शावमाशौचम्' इत्येतद्वचनमवतिष्ठते । अवश्यं चैकशरीरावयवान्वयेन सापिण्ड्यं वर्णनीयम् । 'आत्मा हि जज्ञ आत्मनः' इत्यादिश्रुतेः । तथा 'प्रजामनु प्रजायसे' इतिच । 'स एवायं विरूढः प्रत्यक्षेणोपलभ्यते' इत्यापस्तम्बवचनाच्च । तथा गर्भोपनिषदि—'एतत् षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतोऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणि मातृतः' इति तत्रतत्रावयवान्वयप्रतिपादनात् । निर्वाप्यपिण्डान्वयेन तु सापिण्ड्ये- (ऽङ्गीक्रियमाणे) मातृसंताने भ्रातृपितृव्यादिषु च सापिण्ड्यं न स्यात् । समुदायशक्त्यङ्गीकारेण रूढिपरिग्रहेऽवयवशक्तिस्तत्रतत्रावगम्यमाना परित्यक्ता स्यात् । (सर्वत्रावयवार्थेषु योन्यत्रार्थे प्रयुज्यते तत्रानन्यगतित्वेन समुदायः प्रसिद्ध्यति ।) परम्परयैकशरीरावयवान्वयेन तु सापिण्ड्ये यथा नातिप्रसङ्गस्तथा वक्ष्यामः । यवीयसीं वयसा प्रमाणतश्च न्यूनां उद्वहेत्परिणयेत्स्वगृह्योक्तविधिना ॥ ५२ ॥

विशेषान्तराण्याह—

## अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।

अरोगिणीं अचिकित्सनीयव्याध्यनुपसृष्टाम् । भ्रातृमतीं पुत्रिकाकरणशङ्कानिवृत्तये । अनेनापरिभाषितापि पुत्रिका भवतीति गम्यते । असमानार्षगोत्रजां ऋषेरिदमार्षं नाम प्रवर इत्यर्थः । गोत्रं वंशपरम्पराप्रसिद्धं । आर्षं च गोत्रं च आर्षगोत्रे । समाने आर्षगोत्रे यस्यासौ समानार्षगोत्रस्तस्माज्जाता समानार्षगोत्रजा न समानार्षगोत्रजा असमानार्षगोत्रजा ताम् । गोत्रप्रवरौ च पृथक्पृथक्पर्युदासनिमित्तम् । तेनासमानार्षजामसमानगोत्रजामिति । तथाच 'असमानप्रवरैर्विवाहः' इति गौतमः । तथा 'असपिण्डा च या मातुरसपिण्डा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥' इति ( ३।५ ) मनुः । तथा मातृगोत्रामप्यपरिणेयां केचिदिच्छन्ति । 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव गत्वा चान्द्रायणं चरेत् ॥' इति प्रायश्चित्तस्मरणात् । अत्र चासपिण्डामित्यनेन पितृष्वसृमातृष्वस्रादिदुहितृनिषेधः । तथा असगोत्रामित्यनेनासपिण्डाया अपि भिन्नसन्तानजायाः समानगोत्राया निषेधः । तथा असमानप्रवरामित्यनेनाप्यसपिण्डाया असगोत्राया अपि समानप्रवराया निषेधः । तथाच असपिण्डामित्येतत्सार्ववर्णिकम् । सर्वत्र सापिण्ड्यसद्भावात् । असमाना-

१ पिण्डनिर्वापणयुक्त्या. निर्वाप्यसपिण्डा. ख. २ भ्रातृपुत्रादिषु ख. भ्रातृव्यपितृव्या ग. ३ क. पुस्तकेऽधिकमिदं. ४ प्रमाणेन च क. ५ असमानगोत्रजां असमानार्षजामित्यर्थः ख. ६ असगोत्रा च ख. ग. ७ अत्र क. पुस्तके 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि । जन्मनाम्नोरविज्ञाने तूद्वहेदविशङ्कितः ॥' इति व्यासः. इति विशेषः. ८ त्यक्त्वा ख.

वंगोत्रजामित्येतत्त्रैवर्णिकविषयम् । यद्यपि राजन्यविशां प्रातिस्विकगोत्राभावा-त्प्रवराभावस्तथापि पुरोहितगोत्रप्रवरौ वेदितव्यौ । तथाच 'यजमानस्यार्षेयान्प्र-वृणीत' इत्युक्त्वा 'पौरोहित्यान्राजन्यविशां प्रवृणीते' इत्याहाश्वलायनः। सपि-ण्डासमानगोत्रासमानप्रवरासु भार्यात्वमेव नोत्पद्यते। रोगिण्यादिषु तु भार्यात्वे उत्पन्नेऽपि दृष्टविरोध एव ॥]

असपिण्डामित्यत्रैकशरीरावयवान्वयद्वारेण साक्षात्परम्परया वा सापिण्ड्यमुक्तं तच्च सर्वत्र सर्वस्य यथाकथंचिदनादौ संसारे संभवतीत्यतिप्रसङ्ग इत्यत आह—

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥ ५३ ॥

मातृतो मातुः संताने पञ्चमादूर्ध्वं पितृतः पितुः संताने सप्तमादूर्ध्वं सापि-ण्ड्यं निवर्तत इति शेषः। अतश्चायं सपिण्डशब्दोऽवयवशक्त्या सर्वत्र वर्तमानो-ऽपि निर्मन्थ्यपङ्कजादिशब्दवन्नियतविषय एव । तथाच पित्रादयः षट् सपिण्डाः पुत्रादयश्च षट् आत्मा च सप्तमः संतानभेदेपि यतः संतानभेदस्तमादाय गण-येद्यावत्सप्तम इति सर्वत्र योजनीयम् । तथाच मातरमारभ्य तत्पितृपितामहादि-गणनायां पञ्चमसंतानवर्तिनी मातृतः पञ्चमीत्युपचर्यते । एवं पितरमारभ्य तत्पि-त्रादिगणनायां सप्तमपुरुषसंतानवर्तिनी पितृतः सप्तमीति । तथाच 'भगिन्यो-र्भगिनीभ्रात्रोर्भ्रातृपुत्रीपितृव्ययोः। विवाहे ऽर्थ्यादिभूतत्वाच्छाखाभेदोऽवगण्यते॥' यदपि वसिष्ठेनोक्तं—'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा' इति। 'त्रीनतीत्य मातृतः पञ्चातीत्य च पितृतः' इति च पैठीनसिना तदप्यर्वाङ्निषेधार्थं न पुनस्त-त्प्राह्यर्थमिति सर्वस्मृतीनामविरोधः। एतच्च समानजातीये द्रष्टव्यम् । विजातीये तु विशेषः। यथाह शङ्खः—'यद्येकजाता बहवः पृथक्क्षेत्राः पृथक्जनाः। एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥' एकस्मात् ब्राह्मणादेर्जाताः एकजाताः। पृथक्क्षेत्राः भिन्नजातीयासु भिन्नासु स्त्रीषु जाताः। पृथक्जनाः समानजातीयासु भिन्नासु स्त्रीषु जातास्ते एकपिण्डाः किंतु पृथक्शौचाः । पृथक्शौचमाशौचप्रकरणे वक्ष्यामः। पिण्डस्त्वावर्तते त्रिषु त्रिपुरुषमेव सापिण्ड्यमिति ॥ ५३ ॥

दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ।

पुरुषा एव पूरुषाः दशभिः पुरुषैः मातृतः पञ्चभिः पितृतः पञ्चभिर्विख्यातं यत्कुलं तस्मात् । श्रोत्रियाणामधीतवेदानाम् । अध्ययनमुपलक्षणं श्रुताध्यय-नसंपन्नानाम् । महच्च तत्कुलं च महाकुलं पुत्रपौत्रपशुदासीग्रामादिसमृद्धं तस्मात्कन्या आहर्तव्येति नियम्यते ॥

एवं सर्वतः प्राप्तौ सत्यामपवादमाह—

स्फीतादपि न संचारिरोगदोषसमन्वितात् ॥ ५४ ॥

१ गोत्रप्रवर्तकऋष्यपत्यत्वप्रयुक्तत्वमत्र प्रातिस्विकत्वम्. प्रातिस्विकगोत्राभावस्तथापि ख. २ दृष्टदोषविरोधः क. ३ शब्दो योगेऽवयव. क. ४ वयवशक्त्या प्रवर्त. क. ५ पञ्चमपुरुषव-र्तिनी ख. ६ त्र्यादि ख. ७ वगम्यते क. ८ एकपिण्डाः सपिण्डाः ख. ९ पौरुष क.

स्फीतादिति। संचारिणो रोगाः श्वित्रकुष्ठापस्मारप्रभृतयः शुक्रशोणितद्वारेणानुप्रविशन्तो दोषाः। पुनः हीनक्रियनिःपौरुषत्वादयो मनुनोक्ताः। एतैः समन्विता स्स्फीतादपि पूर्वोक्तान्महाकुलादपि नाहर्तव्या ॥ ५४ ॥

एवं कन्याग्रहणनियममुक्त्वा कन्यादाने वरनियममाह—

**एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः।**
**यत्नात्परीक्षितः पुंस्त्वे युवा धीमाञ्जनप्रियः॥ ५५ ॥**

एतैरेव पूर्वोक्तैर्गुणैर्युक्तो दोषैश्च वर्जितो वरो भवति। तस्यायमपरो विशेषः। सवर्ण उत्कृष्टो वा न हीनवर्णः। श्रोत्रियः स्वयं च श्रुताध्ययनसंपन्नः। यत्नात्प्रयत्नेन पुंस्त्वे परीक्षितः। परीक्षोपायश्च नारदेन दर्शितः—'यस्याप्सु प्लवते बीजं ह्रादि मूत्रं च फेनिलम्। पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढकः॥ (ह्रादिफेनिलमूत्रश्च गुरुशुक्रर्षभस्वरः। पुमान्स्यादन्यथा पाण्डुदुश्चिकित्स्यो मुखेभगः॥ शुभबीजवति क्षेत्रे पुत्राः संतानवर्धनाः। निष्ठा विवाहमन्त्राणां तासां स्यात्सप्तमे पदे॥')[1] इति। युवा न वृद्धः। धीमान् लौकिकवैदिकव्यवहारेषु निपुणमतिः। जनप्रियः स्मितपूर्वमृद्वभिभाषणादिभिरनुरक्तजनः[2] ॥ ५५ ॥

रति-पुत्र-धर्मार्थत्वेन विवाहस्त्रिविधः। तत्र पुत्रार्थो द्विविधः नित्यः काम्यश्च। तत्र नित्ये प्रजार्थे 'सवर्णः श्रोत्रियो वरः' इत्यनेन सवर्णा मुख्या दर्शिता। इदानीं काम्ये नित्यसंयोगे चानुकल्पो वक्तव्य इत्यत आह—

**यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः।**
**नैतन्मम मतं यस्मात्तत्रायं जायते स्वयम्॥ ५६ ॥**

यदुच्यते 'सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः॥' इत्युपक्रम्य ब्राह्मणस्य चतस्रो भार्याः क्षत्रियस्य तिस्रो वैश्यस्य द्वे इति द्विजातीनां शूद्रावेदनमिति। नैतद्याज्ञवल्क्यस्य मतम्। यस्मादयं द्विजातिस्तत्र स्वयं जायते। 'तज्जाया जाया भवति यदस्यां जायते पुनः' इति श्रुतेः। अत्र च तत्रायं जायते स्वयमिति हेतुं वदता नैत्यकपुत्रोत्पादनाय काम्यपुत्रोत्पादनाय वा प्रवृत्तस्य शूद्रापरिणयननिषेधं कुर्वता नैत्यकपुत्रोत्पादनानुकल्पे काम्ये च पुत्रोत्पादने ब्राह्मणस्य क्षत्रियावैश्ये क्षत्रियस्य च वैश्याभार्याभ्यनुज्ञाता[3] भवति ॥ ५६ ॥

इदानीं रतिकामस्योत्पन्नपुत्रस्य वा विनष्टभार्यस्याश्रमान्तरानधिकारिणो गृहस्थाश्रमावस्थामात्राभिकाङ्क्षिणः परिणयनक्रममाह—

**तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम्।**
**ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः॥ ५७ ॥**

वर्णक्रमेण ब्राह्मणस्य तिस्रो भार्याः। क्षत्रियस्य द्वे। वैश्यस्यैका। शूद्रस्य तु

१ अयं पाठः क. पुस्तकेऽधिकः. २ सितमृदुपूर्वाभिभाषण. क. ३ वैश्याभ्यनुज्ञा. ख.

सैव भार्या भवति। सवर्णा पुनः सर्वेषां मुख्या स्थितैव। पूर्वस्याः पूर्वस्या अभावे उत्तरोत्तरा भवति। अयमेव च क्रमो नैत्यकानुकल्पे काम्ये च पुत्रोत्पादनविधौ। अतश्च यच्छूद्रापुत्रस्य पुत्रमध्ये परिगणनं विभागसंकीर्तनं च, तथा 'विप्रान्मूर्धावसिक्तो हि' इत्युपक्रम्य 'विन्नास्वेष विधिः स्मृतः' इति च तद्रतिकामस्याश्रममात्राभिकाङ्क्षिणो वा नान्तरीयकतयोत्पन्नस्य ॥ ५७ ॥

विवाहानाह—

ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ५८ ॥

स ब्राह्माभिधानो विवाहः यस्मिन्नुक्तलक्षणाय वरायाहूय यथाशक्त्यलंकृता कन्या दीयते उदकपूर्वकं, तस्यां जातः पुत्र उभयतः पित्रादीन्दश पुत्रादींश्च दश आत्मानं चैकविंशं पुनाति सद्वृत्तश्चेत् ॥ ५८ ॥

दैवार्षविवाहौ—

यज्ञस्थऋत्विजे दैव आदायार्षस्तु गोद्वयम्।
चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ५९ ॥

स दैवो विवाहो यस्मिन्यज्ञानुष्ठाने वितते ऋत्विजे शक्त्यलंकृता कन्या दीयते। यत्र पुनर्गोमिथुनमादाय कन्यां दीयते स आर्षः। प्रथमजो दैवविवाहजश्चतुर्दश पुनाति सप्तावरान् सप्तपरान्। उत्तरज आर्षविवाहजः षट् पुनाति त्रीन्पूर्वान् त्रीन्परान् ॥ ५९ ॥

प्राजापत्यविवाहलक्षणम्—

इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने।
स कायः पावयेत्तज्जः षट् षट् वंश्यान्सहात्मना ॥ ६० ॥

सह धर्मं चरतामिति परिभाष्य कन्यादानं स प्राजापत्यः। तज्जः षट् पूर्वान्षट् परान् आत्मना सहेत्येवं त्रयोदश पुनाति ॥ ६० ॥

आसुरगान्धर्वादिविवाहलक्षणानि—

आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः।
राक्षसो युद्धहरणात्पैशाचः कन्यकाछलात् ॥ ६१ ॥

आसुरः पुनर्द्रविणादानात्। गान्धर्वस्तु परस्परानुरागेण भवति। राक्षसो युद्धेनापहरणात्। पैशाचस्तु कन्यकाछलात् छलेन छद्मना स्वापाद्यवस्था[२]स्वपहरणात् ॥ ६१ ॥

सवर्णादिपरिणयने विशेषमाह—

पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम्।
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥ ६२ ॥

---

१ अन्योद्देश्यकव्यापारनिर्वर्त्यत्वं; यमन्तरा नोद्देश्यसिद्धिस्तत्वं वा नान्तरीयकत्वम्. २ ख-वस्थासु हरणात्. क.

सवर्णासु विवाहे स्वगृह्योक्तविधिना पाणिरेव ग्राह्यः। क्षत्रियकन्या तु शरं गृह्णीयात्। वैश्या प्रतोदमादद्यात्। उत्कृष्टवेदने शूद्रा पुनर्वसनस्य दशाम्। यथाह मनुः (३।४४)—'वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने' इति॥ ६२॥

कन्यादातृक्रममाह—

पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥ ६३॥
अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ।
गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम्॥ ६४॥

एतेषां पित्रादीनां पूर्वस्य पूर्वस्याभावे परः परः कन्याप्रदः प्रकृतिस्थश्चेत् यद्युन्मादादिदोषवान्न भवति। अतो यस्याधिकारः सोऽप्रयच्छन् भ्रूणहत्यामृतावृतावाप्नोति। एतच्चोक्तलक्षणवरसंभवे वेदितव्यम्। यदा पुनर्दातॄणामभावस्तदा कन्यैव गम्यं गमनार्हमुक्तलक्षणं वरं स्वयमेव वरयेत्॥ ६३॥ ६४॥

कन्याहरणे दण्डः—

सकृत्प्रदीयते कन्या हरंस्तां चौरदण्डभाक्।

सकृदेव कन्या प्रदीयत इति शास्त्रनियमः। अतस्तां दत्त्वा अपहरन् कन्यां चौरवद्दण्ड्यः॥

एवं सर्वत्र प्रतिषेधे प्राप्तेऽपवादमाह—

दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत्॥ ६५॥

यदि पूर्वस्माद्वराच्छ्रेयान्विद्याभिजनाद्यतिशययुक्तो वर आगच्छति पूर्वस्य च पातकयोगो दुर्वृत्तत्वं वा तदा दत्तामपि हरेत्। एतच्च सप्तमपदात्प्राग्द्रष्टव्यम्॥ ६५॥

अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम्।
अदुष्टां तु[1] त्यजन्दण्ड्यो दूषयंस्तु मृषा शतम्॥ ६६॥

यः पुनश्चक्षुर्ग्राह्यं दोषमनाख्याय कन्यां प्रयच्छति असावुत्तमसाहसं दण्ड्यः। उत्तमसाहसं च वक्ष्यते[2]। अदुष्टां तु प्रतिगृह्य त्यजन्नुत्तमसाहसमेव दण्ड्यः। यः पुनर्विवाहात्प्रागेव द्वेषादिना असद्भिर्दोषैर्दीर्घरोगादिभिः कन्यां दूषयति स पणानां वक्ष्यमाणलक्षणानां शतं दण्ड्यः॥ ६६॥

अनन्यपूर्विकामित्यत्रानन्यपूर्वा परिणेयोक्ता तत्रान्यपूर्वा कीदृशीत्याह—

अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत्॥ ६७॥

अन्यपूर्वा द्विविधा पुनर्भूः स्वैरिणी चेति। पुनर्भूरपि द्विविधा क्षता चाक्षता

१ च त्यजन् क. २ अग्रे व्यवहाराध्याये.

च। तत्र क्षता संस्कारात्प्रागेव पुरुषसंबन्धदूषिता। अक्षता पुनः संस्कारदूषिता। या पुनः कौमारे पतिं त्यक्त्वा कामतः सवर्णमाश्रयति सा स्वैरिणीति ६७

एवं सर्वप्रकारेणान्यपूर्वापर्युदासे प्राप्ते विशेषमाह—

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋताविया‌त्॥६८॥
आगर्भसंभवाद्गच्छेत्पतितस्त्वन्यथा भवेत्।
अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः॥ ६९ ॥

अपुत्रामलब्धपुत्रां पित्रादिभिः पुत्रार्थमनुज्ञातो देवरो भर्तुः कनीयान् भ्राता सपिण्डो वा उक्तलक्षणः सगोत्रो वा। एतेषां पूर्वस्य पूर्वस्याभावे परः परः घृताभ्यक्तसर्वाङ्गः ऋतावेव वक्ष्यमाणलक्षणे इयाद्गच्छेत् आगर्भोत्पत्तेः। ऊर्ध्वं पुनर्गच्छन् अन्येन वा प्रकारेण तदा पतितो भवति। अनेन विधिनोत्पन्नः पूर्वपरिणेतुः क्षेत्रजः पुत्रो भवेत्। एतच्च वाग्दत्ताविषयमित्याचार्याः। 'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजो विन्देत देवरः॥' इति (९।६९) मनुस्मरणात्॥ ६८ ॥ ६९ ॥

व्यभिचारिणीं प्रत्याह—

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम्॥ ७० ॥

या व्यभिचरति तां हृताधिकारां भृत्यभरणाद्यधिकाररहिताम्। मलिनां अनाभ्यञ्जनशुभ्रवस्त्राभरणशून्याम्। पिण्डमात्रोपजीविनीं प्राणयात्रामात्रभोजनाम्। धिक्कारादिभिः परिभूतां भूतलशायिनीं स्ववेश्मन्येव वासयेत्। वैराग्यजननार्थं न पुनः शुद्ध्यर्थम्। 'यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम्' इति पृथक्प्रायश्चित्तोपदेशात्॥ ७० ॥

तस्या अल्पप्रायश्चित्तार्थमर्थवादमाह—

सोमः शौचं ददावासां गन्धर्वश्च शुभां गिरम्।
पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः॥ ७१ ॥

परिणयनात्पूर्वं सोमगन्धर्ववह्नयः स्त्रीर्भुक्त्वा यथाक्रमं तासां शौचमधुरवचनसर्वमेध्यत्वानि दत्तवन्तः। तस्मात्स्त्रियः सर्वत्र स्पर्शनालिङ्गनादिषु मेध्याः शुद्धाः स्मृताः॥ ७१ ॥

नच तस्यास्तर्हि दोषो नास्तीत्याशङ्कनीयमित्याह—

व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते।
गर्भभर्तृवधादौ च तथा महति पातके॥ ७२ ॥

---

१ ददौ स्त्रीणां क. २ 'स्त्रियो भुक्त्वा' क.

अप्रकाशितान्मनोऽभिचारात्पुरुषान्तरसंभोगसंकल्पाद्यदपुण्यं तस्य ऋतौ रजोदर्शने शुद्धिः । शूद्रकृते तु गर्भे त्यागः । (मनुः ९।१५५) 'ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण संगताः । अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः ॥' इति स्मरणात् । तथा गर्भवधे भर्तृवधे महापातके च ब्रह्महत्यादौ आदिग्रहणाच्छिष्यादिगमने च त्यागः । 'चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या । पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥' इति व्यासस्मरणात् । जुङ्गितः प्रतिलोमजश्चर्मकारादिः । त्यागश्चोपभोगधर्मकार्ययोः नतु निष्कासनं गृहात्तस्याः । 'निरुन्ध्यादेकवेश्मनि' इति नियमात् ॥ ७२ ॥

द्वितीयपरिणयने हेतूनाह—

सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ ७३ ॥

सुरां पिबतीति सुरापी शूद्रापि । 'पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत्' इति सामान्येन प्रतिषेधात् । व्याधिता दीर्घरोगग्रस्ता । धूर्ता विसंवादिनी । वन्ध्या निष्फला । अर्थघ्नी अर्थनाशिनी । अप्रियंवदा निष्ठुरभाषिणी । स्त्रीप्रसूः स्त्रीजननी । पुरुषद्वेषिणी सर्वत्राहितकारिणी । अधिवेत्तव्येति प्रत्येकमभिसंबध्यते[1] । अधिवेदनं भार्यान्तरपरिग्रहः ॥ ७३ ॥

अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ।
यत्रानुकूल्यं दंपत्योस्त्रिवर्गस्तत्र वर्धते ॥ ७४ ॥

किंच । सा अधिविन्ना पूर्ववदेव दानमानसत्कारैर्भर्तव्या । अन्यथाऽभरणे महदपुण्यं वक्ष्यमाणो दण्डश्च । नच भरणे सति केवलमपुण्यपरिहारः । यतः यत्र दंपत्योरानुकूल्यं चित्तैक्यं तत्र धर्मार्थकामानां प्रतिदिनमभिवृद्धिः ॥ ७४ ॥

स्त्रियं प्रत्याह—

मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।
सेह कीर्तिमवाप्नोति मोदते चोमया सह ॥ ७५ ॥

भर्तरि जीवति मृते वा या चापल्यादन्यं पुरुषं नोपगच्छति[2] सेह लोके विपुलां कीर्तिमवाप्नोति । उमया च सह क्रीडति पुण्यप्रभावात् ॥ ७५ ॥

अधिवेदनकारणाभावे अधिवेत्तारंप्रत्याह—

आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥ ७६ ॥

आज्ञासंपादिनीमादेशकारिणीम्[3], दक्षां शीघ्रकारिणीम्, वीरसूं पुत्रवतीम्, प्रियवादिनीं मधुरभाषिणीं यस्त्यजति अधिविन्दति स राज्ञा स्वधनस्य तृतीयांशं दाप्यः । निर्धनस्तु भरणं ग्रासाच्छादनादि दाप्यः ॥ ७६ ॥

---

१ सर्वत्र संबध्यते क. २ नैवोपगच्छति क. ३ आदेशसंपादिनीं ख.

स्त्रीधर्मानाह—

**स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः।**
**आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः॥ ७७॥**

स्त्रीभिः सदा भर्तृवचनं कार्यम्। यस्मादयमेव पर उत्कृष्टो धर्मः स्त्रीणां स्वर्गहेतुत्वात्। यदा तु महापातकदूषितस्तदा आशुद्धेः संप्रतीक्ष्यः। न तत्पारतन्त्र्यम्। उत्तरकालं तु पूर्ववदेव तत्पारतन्त्र्यम्॥ ७७॥

शास्त्रीयदारसंग्रहस्य फलमाह—

**लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः।**
**यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः॥ ७८॥**

लोके आनन्त्यं वंशस्याविच्छेदः दिवः प्राप्तिश्च दारसंग्रहस्य प्रयोजनम्। कथमित्याह। पुत्रपौत्रप्रपौत्रकैर्लोकानन्त्यम्, अग्निहोत्रादिभिश्च स्वर्गप्राप्तिरित्यन्वयः। यस्मात्स्त्रीभ्य एतद्द्वयं भवति तस्मात् स्त्रियः सेव्या उपभोग्याः प्रजार्थम्। रक्षितव्याश्च धर्मार्थम्। तथाचापस्तम्बेन धर्मप्रजासंपत्तिः प्रयोजनं दारसंग्रहस्योक्तं 'धर्मप्रजासंपन्नेषु दारेषु नान्यां कुर्वीत' इति वदता। रतिफलं तु लौकिकमेव॥७८॥

पुत्रोत्पत्त्यर्थं स्त्रियः सेव्या इत्युक्तं तत्र विशेषमाह—

**षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत्।**
**ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु[2] वर्जयेत्॥ ७९॥**

स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः काल ऋतुः। सच रजोदर्शनदिवसादारभ्य षोडशाहोरात्रस्तस्मिन् ऋतौ युग्मासु समासु रात्रिषु। रात्रिग्रहणाद्दिवसप्रतिषेधः। संविशेत् गच्छेत्पुत्रार्थम्। युग्मास्विति बहुवचनं समुच्चयार्थं। अतश्चैकस्मिन्नपि ऋतौ अप्रतिषिद्धासु युग्मासु सर्वासु रात्रिषु गच्छेत्। एवं गच्छन्ब्रह्मचार्येव भवति। अतो यत्र ब्रह्मचर्यं श्राद्धादौ[3] चोदितं तत्र गच्छतोपि न ब्रह्मचर्यस्खलनदोषोऽस्ति। किंच पर्वाण्याद्याश्चतस्रस्तु वर्जयेत्। पर्वाणीति बहुवचनादाद्यर्थावगमादष्टमीचतुर्दश्योर्ग्रहणम्। यथाह मनुः(४।१५५)—'अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम्। ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥' इति। अतोऽमावास्यादीनि रजोदर्शनादारभ्य चतस्रो रात्रीश्च वर्जयेत्॥ ७९॥

**एवं गच्छन् स्त्रियं क्षामां मघां मूलं[4] च वर्जयेत्।**
**सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान्॥ ८०॥**

एवमुक्तेन प्रकारेण स्त्रियं गच्छन् क्षामां गच्छेत्। क्षामता च तस्मिन्काले रजस्वलाव्रतेनैव भवति। अथ चेन्न भवति तदा कर्तव्या क्षामता पुत्रोत्पत्त्यर्थमल्पास्निग्धभोजनादिना। 'पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः' इति

१ सर्वथा क. २ चतस्रश्च. ख. ३ श्राद्धादिषु क. ४ पौष्णं च क.

वचनात् । यदा युग्मायामपि रात्रौ शोणिताधिक्यं तदा स्त्र्येव भवति पुरुषाकृतिः । अयुग्मायामपि शुक्राधिक्ये पुमानेव भवति स्त्र्याकृतिः । कालस्य निमित्तत्वात्[1] । शुक्रशोणितयोश्चोपादानकारणत्वेन प्राबल्यात् । तस्मात्क्षामा कर्तव्या । मघामूलनक्षत्रे वर्जयेत् । चन्द्रे चैकादशादिशुभस्थानगते चकारात्पुंनक्षत्रशुभयोगलग्नादिसंपत्तौ सकृदेकस्यां रात्रौ न द्विस्त्रिर्वा । ततो लक्षणैर्युक्तं पुत्रं जनयति । पुमानप्रतिहतपुंस्त्वः ॥ ८० ॥

एवमृतौ नियममुक्त्वा इदानीमनृतौ नियममाह—

**यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।**
**स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥ ८१ ॥**

भार्याया इच्छानतिक्रमेण प्रवृत्तिरस्यास्तीति यथाकामी भवेत् । वाशब्दो नियमान्तरपरिग्रहार्थो न पूर्वनियमनिवृत्त्यर्थः । स्त्रीणां वरमिन्द्रदत्तमनुस्मरन् 'भवतीनां कामविहन्ता पातकी स्यात्' इति । यथा 'ता अब्रुवन् वरं वृणीमहा[2] ऋत्वियात्प्रजां विन्दामहै काममाविजनितोः संभवामेति तस्मादृत्वियात्स्त्रियः प्रजां विन्दन्ते काममाविजनितोः संभवन्ति वारे वृतं[3] ह्यासाम्' इति । अपिच स्वदारेष्वेव निरतः नितरां रतस्तन्मनस्को भवेदित्यनुषज्यते । एवकारेण स्त्र्यन्तरगमनं निवर्तयति, प्रायश्चित्तस्मरणात् । उभयत्रापि दृष्टप्रयोजनमाह—स्त्रियो रक्ष्या यतः स्मृता इति । यस्मात्स्त्रियो रक्ष्याः स्मृता उक्ताः[4] 'कर्तव्याश्च सुरक्षिताः' इति । तत्र सुरक्षितत्वं यथाकामित्वेन स्त्र्यन्तरागमनेन च भवतीति । अत्राह । तस्मिन्युग्मासु संविशेदिति किमयं विधिर्नियमः परिसंख्या[5] वा । उच्यते । न तावद्विधिः, प्राप्तार्थत्वात्[7] । नापि परिसंख्या, दोषत्रयसमासक्तेः[6] । अतो नियमं प्रतिपेदिरे न्यायविदः । कः पुनरेषां भेदः । अत्यन्ताप्राप्तप्रापणं विधिः । यथा 'अग्निहोत्रं जुहुयात्' 'अष्टकाः कर्तव्याः' इति ॥ पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः । यथा 'समे देशे यजेत' 'दर्शपूर्णमासाभ्यां यजेत' इति यागः कर्तव्यतया विहितः । सच देशमन्तरेण कर्तुमशक्य इत्यर्थाद्देशः प्राप्तः । सच द्विविधः समो विषमश्चेति । यदा यजमानः समे यियक्षते तदा समे यजेतेति वचनमुदास्ते, स्वार्थस्य प्राप्तत्वात्[8] । यदा तु विषमे देशे यियक्षते तदा समे यजेतेति स्वार्थं विधत्ते, स्वार्थस्य तदानीमप्राप्तत्वात् । विषमदेशनिवृत्तिस्त्वार्थिकी । चोदितदेशेनैव यागनिष्पत्तेरचोदितदेशोपादानेन यथाशास्त्रं यागो नानुष्ठितः स्यादिति । तथा 'प्राङ्मुखोऽन्नानि भुञ्जीत' इति । इदमपि स्मार्तमुदाहरणं पूर्वेण व्याख्यातम् ॥ एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनं परिसंख्या । तद्यथा

१ कालस्यानियतत्वात् क. २ वृणीमहै ख. ३ वरं वृतं तासां ख. ४ उक्ताः पूर्वं ७८ श्लोके. ५ विध्यादयश्च—'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके विधिः । तत्र चान्यत्र वा प्राप्तौ परिसंख्या निगद्यते' इति. ६ दोषत्रयासक्तेः क. ७ प्राप्तार्थत्वात् क. ८ स्त्वर्थात्सिद्धा क.

'इमामगृभ्णन्नशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्ययं मन्त्रः स्वसामर्थ्यादश्वाभिधान्या गर्दभाभिधान्याश्च रशनाया ग्रहणे विनियुक्तः पुनरश्वाभिधानीमादत्त इत्यनेनाश्वाभिधान्यां विनियुज्यमानो गर्दभाभिधान्याः निवर्तते। यथा 'पञ्च पञ्चनखा भक्ष्याः' इत्यत्र हि यदृच्छया शशादिषु श्वादिषु च भक्षणं प्राप्तं पुनः शशादिषु श्रूयमाणं श्वादिभ्यो निवर्तत[1] इति किंपुनरत्र युक्तं। परिसंख्येत्याह। तथाहि कृतदारसंग्रहस्य स्वेच्छयैवर्तौ गमनं प्राप्तमिति न विधेरयं विषयः। नापि नियमस्य। गृह्यस्मृतिविरोधात्। एवंहि स्मरन्ति गृह्यकाराः—'दारसंग्रहानन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यात्' इति। तत्र द्वादशरात्रात्संवत्सराद्वा पूर्वमेवर्तुसंभवे ऋतौ गच्छेदेवेति नियमाद्ब्रह्मचर्यस्मरणं बाध्येत। अपिच प्राप्ते भावार्थे वचनं विशेषणपरं युक्तं, प्राप्तं चर्तौ भार्यागमनम्[2]इच्छयैव, अतो यदि गच्छेदृतावेवेति वचनव्यक्तिर्युक्ता। किंच नैयमिकात्पुत्रोत्पत्तिविधेरेव ऋतौ गमनं नित्यप्राप्तमेवेति ऋतौ गच्छेदेवेति नियमोऽनर्थकः स्यात्। नियमे चादृष्टं कल्पनीयम्। किंच ऋतौ गन्तव्यमेवेति नियमे असन्निहितस्य व्याध्यादिना असमर्थस्यानिच्छोश्चाशक्योऽर्थे उपदिष्टः स्यात्। विध्यनुवादविरोधश्च नियमे। तथाहि एकः शब्दः सकृदुच्चरितस्तमेवार्थं पक्षेऽनुवदति पक्षेऽनुविधत्ते चेति। तस्मादृतावेव गच्छेन्नान्यत्रेति परिसंख्यैव युक्ता। तदिदं भा[3]रुचिविश्वरूपादयो नानुमन्यन्ते। अतो नियम एव युक्तः। पक्षे स्वार्थविधिसंभवात् अगमने दोषश्रवणाच्च। 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥' इति। नच विध्यनुवादविरोधः, अनुवादाभावाद्विध्यर्थत्वाच्च वचनस्य। तत्रहि विध्यनुवादविरोधो यत्र विधेयावधितया तदेवाऽनुवदितव्यं, अप्राप्ततया[4]न्योद्देशेन विधातव्यं च। यथा वाजपेयाधिकरणपूर्वपक्षे वाजपेयेन स्वाराज्यकामो यजेतेति वाजपेयलक्षणगुणविधानावधित्वेन यागोऽनुवदितव्यः। सएव स्वाराज्यलक्षणफलोद्देशेन विधातव्यश्चेति। नचानुवादेनेह कृत्यमस्ति। यत्तु नियमेऽदृष्टं कल्प्यमित्युक्तं तत्परिसंख्यायामपि समानम्। अनृतौ गच्छतो दोषकल्पनात्। यत्तु नैयमिकपुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमनप्राप्तेर्न नियम इति। तद[5]सत्। स एवायं नैयमिकपुत्रोत्पादनविधिः। स्यान्मतम् 'एवं गच्छन् स्त्रियं क्षामां लक्षण्यं पुत्रं जनयेत्' इति व्यभिगमनातिरिक्तः पुत्रोत्पादनविधिरिति। तन्न। ग[6]मनकरणिकाया भावनाया एव पुत्रोत्पत्तिकर्मता प्रदर्श्यते। एवं गच्छन् लक्षण्यं पुत्रं जनयेदित्यनेन यथाग्निहोत्रं जुह्वन् स्वर्गं भावयेदिति। नचासंनिहितादेरशक्यार्थविधिप्रसंगः। सन्निहितशक्तयोरेवोपदेशात् 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति' इति। 'यः स्वदारानृतुस्नातान्स्वस्थः सन्नोपगच्छति' इति विशेषोपादानात्। अनिच्छानिवृत्तिस्तु नियमविधानादेव। नच विशेषणपरतापि। पक्षे भावार्थविधिसंभवात्। नापि गृह्यस्मृतिविरोधः। संव-

१ निवर्तयति ख. २ भार्येच्छयैव क. ३ भागुरि क. ४ तया फलोद्देशेन क. ५ तदसदिति क. नास्ति. ६ यतस्तच्च गमन. क.

स्मरात्पूर्वमेवर्तुदर्शने संविशतो न ब्रह्मचर्यस्खलनदोषो यथा श्राद्धादिषु । तस्मात्स्वार्थहानि-परार्थकल्पना-प्राप्तबाधलक्षणदोषत्रयवती परिसंख्या न युक्ता । एवं पञ्च पञ्चनखा भक्ष्या इत्यत्र यद्यपि शशादिषु भक्षणस्य पक्षे प्राप्तेर्नियमः शशादिषु, श्वादिषु च प्राप्तेः परिसंख्येत्युभयसंभवस्तथापि नियमपक्षे शशाद्यभक्षणे दोषप्रसंगः, श्वादिभक्षणे चादोषप्रसंगेन प्रायश्चित्तस्मृतिविरोध[1] इति परिसंख्यैवाश्रिता । एतेन 'सायंप्रातर्द्विजातीनामशनं स्मृतिनोदितम्[2]' इत्यत्रापि नियमो व्याख्यातः । 'नान्तरा भोजनं कुर्यात्' इति च पुनरुक्तं स्यात्परिसंख्यायाम्[3] । एवं च नियमे सति ऋतावृताविति वीप्सा लभ्यते, 'निमित्तावृत्तौ नैमित्तिकमप्यावर्तते' इति न्यायात् । यथाकामी भवेदित्ययमपि नियम एव । अनृतावपि स्त्रीकामनायां सत्यां स्त्रियमभिरमयेदेवेति । 'ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जम्' इत्येतदपि गौतमीयं सूत्रद्वयं नियमपरमेव । ऋतावुपेयादनृतावपि[4] स्त्रीकामनायां सत्यां प्रतिषिद्धवर्जमुपेयादेवेत्यलमतिप्रसंगेन ॥ ८१ ॥

भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥ ८२ ॥

किंच । भर्तृप्रभृतिभिः पूर्वोक्ताः साध्व्यः स्त्रियो यथाशक्त्यलंकारवसनभोजनपुष्पादिभिः संमाननीयाः । यस्मात्ताः पूजिता धर्मार्थकामान्संवर्धयन्ति ॥ ८२ ॥

तया पुनः समर्पितगृहव्यापरया किंभूतया भवितव्यमित्यत आह—

संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।
कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा ॥ ८३ ॥

संयतः स्वस्थाननिवेशितः उपस्करो गृहोपकरणवर्गो यया सा तथोक्ता । यथोलूखलमुसलशूर्पादेः कण्डनस्थाने, दृषदुपलयोरवियोगेन पेषणस्थान इत्यादि । दक्षा गृहव्यापारकुशला । हृष्टा सदैव प्रहसितानना । व्ययपराङ्मुखी न व्ययशीला । स्यादिति सर्वत्र शेषः । किंच । श्वश्रूश्च श्वशुरश्च श्वशुरौ । 'श्वशुरः श्वश्वा' इत्येकशेषः । तयोः पादवन्दनं नित्यं कुर्यात् । श्वशुरग्रहणं मान्यान्तरोपलक्षणार्थम् । भर्तृतत्परा भर्तृवशवर्तिनी सती पूर्वोक्तं कुर्यात् ॥ ८३ ॥

भर्तृसन्निधावुक्तं, प्रोषिते भर्तरि तया किं कर्तव्यमित्यत आह—

क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥ ८४ ॥

देशान्तरगतभर्तृका क्रीडां कन्दुकादिभिः, शरीरसंस्कारमुद्वर्तनादिभिः, समाजो जनसमूहः उत्सवो विवाहादिः तयोर्दर्शनं, हास्यं विजृम्भणं, परगृहगमनं । त्यजेदिति प्रत्येकं संबध्यते ॥ ८४ ॥

---

१ प्रायश्चित्तविरोधः क. २ श्रुतिचोदितं क. ३ परिसंख्यायां । तस्मान्नियमपरमेवेति ग. ४ वुपेयादेवानृतावपि क.

रक्षेत्कन्यां पिता विन्नां पतिः पुत्राश्च वार्धके।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः॥ ८५॥

किंच। पाणिग्रहणात्प्राक् पिता कन्यामकार्यकरणाद्रक्षेत्। तत ऊर्ध्वं भर्ता। तदभावे पुत्राः वृद्धभावे। तेषामुक्तानामभावे ज्ञातयः। ज्ञातीनामभावे राजा। 'पक्षद्वयावसाने तु राजा भर्ता प्रभुः स्त्रियाः' इति वचनात्। अतः क्वचिदपि स्त्रीणां नैव स्वातन्त्र्यम्॥ ८५॥

पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः।
हीना न स्याद्विना भर्त्रा गर्हणीयान्यथा भवेत्॥ ८६॥

किंच। भर्त्रा विना भर्तृरहिता पित्रादिरहिता वा न स्यात्। यस्मात्तद्रहिता गर्हणीया निन्द्या भवेत्। एतच्च ब्रह्मचर्यपक्षे।—'भर्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं वा' इति विष्णुस्मरणात्। अन्वारोहणे महानभ्युदयः। तथाच व्यासः कपोतिकाख्यानव्याजेन दर्शितवान्—'पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम्। तत्र चित्राङ्गदधरं भर्तारं सान्वपद्यत॥ ततः स्वर्गं गतः पक्षी भार्यया सह संगतः। कर्मणा पूजितस्तत्र रेमे च सह भार्यया॥' इति। तथाच शङ्खाङ्गिरसौ—'तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानुषे। तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति॥' इति प्रतिपाद्य तयोरवियोगं दर्शयतः।—'व्यालग्राही यथा सर्पं बलादुद्धरते बिलात्। तद्वदुद्धृत्य सा नारी सह तेनैव मोदते॥ तत्र सा भर्तृपरमा स्तूयमानाप्सरोगणैः। क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दश॥' इति। तथा—'ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः। पुनात्यविधवा नारी तमादाय मृता तु या॥ मृते भर्तरि या नारी समारोहेद्धुताशनम्। सारुन्धतीसमाचारा स्वर्गलोके महीयते॥ यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत्। तावन्न मुच्यते सा हि स्त्रीशरीरात्कथंचन॥' इति। हारीतोपि—'मातृकं पैतृकं चापि यत्र चैव प्रदीयते। कुलत्रयं पुनात्येषा भर्तारं यानुगच्छति॥' इति। तथा—'आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता॥' इति। अयं च सकल एव सर्वासां स्त्रीणामगर्भिणीनामबालापत्यानामाचण्डालं साधारणो धर्मः। भर्तारं यानुगच्छतीत्यविशेषोपादानात्। यानि च ब्राह्मण्यनुगमननिषेधपराणि वाक्यानि—'मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्। इतरेषु तु वर्णेषु तपः परममुच्यते॥ जीवन्ती तद्धितं कुर्यान्मरणादात्मघातिनी। या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत्॥ सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत्॥' इत्येवमादीनि तानि पृथक्चित्यधिरोहणविषयाणि।—'पृथक्-

१ परिणीतां. २ पतिः स्त्रियाः क. ३ तद्रहिता पित्रादिरहिता क. ४ पूजितस्तेन. ५ रोमाणि. ख. ६ वाथ मित्रघ्नः कृतघ्नो वा ख. ब्रह्मघ्नो वा सुरापो वा ग. ७ अयं सर्वासां ख. ८ माचाण्डालानां ख. ९ चित्यन्वारोहण क.

चितिं समारुह्य न विप्रा गन्तुमर्हति' इति विशेषस्मरणात्[1]। अनेन क्षत्रियादिस्त्रीणां पृथक्चितिरभ्यनुज्ञा गम्यते। यत्तु कैश्चिदुक्तं पुरुषाणामिव स्त्रीणामप्यात्महननस्य प्रतिषिद्धत्वादतिप्रवृद्धस्वर्गाभिलाषायाः प्रतिषेधशास्त्रमतिक्रामन्त्या अयमनुगमनोपदेशः श्येनवत्। यथा 'श्येनेनाभिचरन्यजेत' इति तीव्रक्रोधाक्रान्तस्वान्तस्य प्रतिषेधशास्त्रमतिक्रामतः[2] श्येनोपदेश इति। तदयुक्तम्। ये तावत् श्येनकरणिकायां भावनायां भाव्यभूतहिंसायां विधिसंस्पर्शाभावेन प्रतिषेधसंस्पर्शात्फलद्वारेण श्येनस्यानर्थतां वर्णयन्ति तेषां मते हिंसाया एव स्वर्गार्थतया अनुगमनशास्त्रेण विधीयमानत्वात्प्रतिषेधसंस्पर्शाभावादग्नीषोमीयवत्स्पष्टमेवानुगमनस्य श्येनवैषम्यम्। यत्तु मतं हिंसानाम मरणानुकूलो व्यापारः, श्येनश्च परमरणानुकूलव्यापाररूपत्वाद्धिंसैव, कामाधिकारे च करणांशे रागतः प्रवृत्तिसंभवेन विधेरप्रवर्तकत्वात्। रागप्रयुक्तहिंसारूपत्वात् श्येनः प्रतिषिद्धः स्वरूपेणैवानर्थकर इति, तत्राप्यनुगमनशास्त्रेण मरणस्यैव स्वर्गसाधनतया विधानान्मरणे यद्यपि रागतः प्रवृत्तिस्तथापि मरणानुकूले व्यापारेऽग्निप्रवेशादाविति कर्तव्यतारूपे[3] विधित एव प्रवृत्तिरिति न निषेधस्यावकाशः, 'वायव्यं श्वेतमालभेत भूतिकामः' इतिवत्। तस्मात्स्पष्टमेवानुगमनस्य श्येनवैषम्यम्। यत्तु 'तस्मादुह न पुरायुषः स्वःकामी[4] प्रेयात्' इति श्रुतिविरोधादनुगमनमयुक्तमिति। यच्च 'तदुह न स्वःकाम्यायुषः प्राङ् न प्रेयात्[5]' इति स्वर्गफलोद्देशेनायुषः प्रागायुर्व्ययो न कर्तव्यो मोक्षार्थिना, यस्मादायुषः शेषे सति नित्यनैमित्तिककर्मानुष्ठानक्षपितान्तःकरणकलङ्कस्य[6] श्रवणमननिदिध्यासनसंपत्तौ सत्यामात्मज्ञानेन नित्यनिरतिशयानन्दब्रह्मप्राप्तिलक्षणमोक्षसंभवः। तस्मादनित्याल्पसुखरूपस्वर्गार्थमायुर्व्ययो न कर्तव्य इत्यर्थः। अतश्च मोक्षमनिच्छन्त्या अनित्याल्पसुखरूपस्वर्गार्थिन्या अनुगमनं युक्तमितरकाम्यानुष्ठानवदिति सर्वमनवद्यम्॥ ८६॥

**पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया।**
**सेह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम्॥ ८७॥**

किंच। प्रियमनवद्यत्वेन मनसोऽनुकूलम्, आयत्यां यच्छ्रेयस्करं तद्धितं। प्रियं च तद्धितं च प्रियहितं। पत्युः प्रियहितं पतिप्रियहितं तस्मिन् युक्ता निरता। स्वाचारा शोभन आचारो यस्याः सा तथोक्ता। शोभनश्चाचारो दर्शितः शङ्खेन—'नानुक्त्वा गृहान्निर्गच्छेन्नानुत्तरीया न त्वरितं व्रजेन्न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यो न नाभिं दर्शयेदागुल्फाद्वासः परिदध्यान्न स्तनौ विवृतौ कुर्यान्न हसेदप्रावृता भर्तारं तद्बन्धून्वा न द्विष्यान्न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत्संसर्गेण हि कुलस्त्रीणां चारित्रं[7] दुष्यति' इति। विजितेन्द्रिया विजितानि संयमितानि इन्द्रियाणि श्रोत्रादीनि वागादीनि च मनःसहितानि यया सा इह[8]

---

१ विशेषोपादानात्. क. २ प्रतिषिद्धशास्त्र. ग. ३ कर्तव्यतानुरूपं. ख. ४ स्वर्गकामः. ५ प्रेयादिति ख. ६ क्षालितान्तःकरण. ख. ७ हि चरित्रं क. ८ सा तथोक्ता इह क.

लोके कीर्तिं प्रख्यातिं परलोके चोत्तमां गतिं प्राप्नोति। अयं च सकल एव स्त्रीधर्मो विवाहादूर्ध्वं वेदितव्यः। 'प्रागुपनयनात्कामचारकामवादकामभक्षाः' इति स्मरणात्। 'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः' इति च ॥ ८७ ॥

अनेकभार्यं प्रत्याह—

**सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्।**
**सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ॥ ८८ ॥**

सवर्णायां सत्यामन्यामसवर्णां नैव धर्मकार्यं कारयेत्। सवर्णास्वपि बह्वीषु धर्म्ये विधौ धर्मानुष्ठाने ज्येष्ठया विना ज्येष्ठां मुक्त्वा इतरा मध्यमा कनिष्ठा वा न नियोक्तव्या ॥ ८८ ॥

प्रमीतपतिकाया[1] विधिमुक्त्वा इदानीं प्रमीतभार्यं[2] प्रत्याह—

**दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः।**
**आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥ ८९ ॥**

पूर्वोक्तवृत्तवतीं आचारवतीं विपन्नां[3] स्त्रियमग्निहोत्रेण श्रौतेनाग्निना तदभावे स्मार्तेन दाहयित्वा पतिः भर्ता अनुत्पादितपुत्रोऽनिष्टयज्ञो वा आश्रमान्तरेष्वनधिकृतो वा स्त्र्यन्तराभावे पुनर्दारान् अग्नींश्च विधिवदाहरेत्। अविलम्बयन् शीघ्रमेव।—'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः' इति दक्षस्मरणात्। एतच्चाधानेन सहाधिकृताया एव नान्यस्याः। यत्तु—'द्वितीयां चैव यो भार्यां दहेद्वैतानिकाग्निभिः। जीवन्त्यां प्रथमायां हि सुरापानसमं हि तत् ॥' इति। तथा—'मृतायां तु द्वितीयायां योऽग्निहोत्रं समुत्सृजेत्। ब्रह्मघ्नं तं विजानीयाद्यश्च कामात्समुत्सृजेत् ॥' इत्येवमादि, तदाधानेन सहानधिकृताया अग्निदाने वेदितव्यम् ॥ ८९ ॥

इति विवाहप्रकरणम्।

## अथ वर्णजातिविवेकप्रकरणम् ४

ब्राह्मणस्य चतस्रो भार्या भवन्ति क्षत्रियस्य तिस्रो वैश्यस्य द्वे शूद्रस्यैकेत्युक्त्वा, तासु च पुत्रा उत्पादयितव्या इत्युक्तं। इदानीं कस्यां कस्मात् कः पुत्रो भवतीति विवेकुमाह[4]—

**सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।**
**अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः ॥ ९० ॥**

सवर्णेभ्यो ब्राह्मणादिभ्यः सवर्णासु ब्राह्मण्यादिषु सजातयो मातृपितृसमानजातीयाः पुत्रा भवन्ति। 'विन्नास्वेष विधिः स्मृतः' इति सर्वशेषत्वेनोपसंहारा-

१ विधवायाः. २ विधुरं प्रति. ३ मृतां. ४ विवेकमाह ख.

द्विजासु सवर्णास्विति संबध्यते । विन्नाशब्दस्य संबन्धिशब्दत्वाद्वेत्तृभ्यः सवर्णेभ्य इति लभ्यते । एकः सवर्णशब्दः स्पष्टार्थः । अतश्चायमर्थः संवृत्तः । उक्तेन विधिनोढायां सवर्णायां वोढुः सवर्णादुत्पन्नास्तस्मात्समानजातीया भवन्ति । अतश्च कुण्डगोलककानीनसहोढजादीनामसवर्णत्वमुक्तं भवति । ते च सवर्णेभ्योऽनुलोमप्रतिलोमेभ्यश्च भिद्यमानाः साधारणधर्मैरहिंसादिभिरधिक्रियन्ते । —'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः' इति स्मरणात् । अपध्वंसजा व्यभिचारजाताः शूद्रधर्मैरपि द्विजशुश्रूषादिभिरधिक्रियन्ते । ननु कुण्डगोलकयोरब्राह्मणत्वात्[3] श्राद्धे प्रतिषेधोऽनुपपन्नः न्यायविरोधश्च । यो यज्जातीयायज्जातीयायामुत्पन्नः स तज्जातीय एव भवति—यथा गोर्गवि गौः अश्वाद्वडवायामश्वः । तस्माद्ब्राह्मणाद्ब्राह्मण्यामुत्पन्नो ब्राह्मण इति न विरुद्धम् । तथा कानीनपौनर्भवादीननुक्रम्य—'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' इति[4] वक्ष्यमाणवचनविरोधश्च । नैतत्सारं ब्राह्मणेन ब्राह्मण्यामुत्पन्नो ब्राह्मण इति भ्रमनिवृत्त्यर्थः श्राद्धे प्रतिषेधः । यथाऽत्यन्तमप्राप्तस्य पतितस्य श्राद्धे प्रतिषेधः । नच न्यायविरोधः । यत्र प्रत्यक्षगम्या जातिर्भवति तत्र तथा । ब्राह्मणादिजातिस्तु स्मृतिलक्षणा यथास्मरणं भवति । यथा समानेऽपि ब्राह्मण्ये कुण्डिनो वसिष्ठोऽत्रिगौतम[5] इति स्मरणलक्षणं गोत्रम्, तथा मनुष्यत्वे समानेऽपि ब्राह्मण्यादिजातिः स्मरणलक्षणा । मातापित्रोश्चैतदेव जातिलक्षणम् । नचानवस्था । अनादित्वात्संसारस्य शब्दार्थव्यवहारवत् । 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' इति तूक्तानुवादत्वाद्यथासंभवं व्याख्यास्यते । क्षेत्रजस्तु मातृसमानजातीयो नियोगस्मरणात् शिष्टसमाचाराच्च । यथा धृतराष्ट्रपाण्डुविदुराः क्षेत्रजाः सन्तो मातृसमानजातीया इत्यलमतिप्रसङ्गेन । किंचानिन्द्येषु ब्राह्मादिविवाहेषु पुत्राः सन्तानवर्धना अरोगिणो दीर्घायुषो धर्मप्रजासंपन्ना भवन्ति ॥ ९० ॥

सवर्णानुक्त्वा इदानीमनुलोमानाह—

**विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।**
**अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा ॥ ९१ ॥**

ब्राह्मणात्क्षत्रियायां विन्नायामुत्पन्नो मूर्धावसिक्तोनाम पुत्रो भवति । वैश्यकन्यायां विन्नायामुत्पन्नोऽम्बष्ठो[6] नाम भवति । शूद्रायां[7] विन्नायां निषादो नाम पुत्रो भवति । निषादो नाम कश्चिन्मत्स्यघातजीवी प्रतिलोमजः स माभूदिति पारशवोऽयं निषाद इति संज्ञाविकल्पः । विप्रादिति सर्वत्रानुवर्तते । यत्तु 'ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति । क्षत्रियेण वैश्यायामुत्पादितो वैश्य एव भवति । वैश्येन शूद्रायामुत्पादितः शूद्र[8] एव भवति' इति शङ्ख-

१ बोढृभ्यः क. २ सहोढादीनां क. ३ अब्राह्मणत्वे ख. ४ इति वचन. ख. ५ वसिष्ठोगोतम. ख. ६ विन्नायामम्बष्ठो ख. ७ शूद्रायां निषादो ख. ८ शूद्र इति क.

स्मरणं तत्क्षत्रियादिधर्मप्राप्त्यर्थं न पुनर्मूर्धावसिक्तादिजातिनिराकरणार्थं क्षत्रियादिजातिप्राप्त्यर्थं वा। अतश्च मूर्धावसिक्तादीनां क्षत्रियादेरुक्तैरेव दण्डाजिनोपवीतादिभिरुपनयनादिकं कार्यम्। प्रागुपनयनात्कामचारादि पूर्ववदेव वेदितव्यम्॥ ९१॥

वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः॥ ९२॥

वैश्यायां शूद्रायां च विन्नायां राजन्यान्माहिष्योग्रौ यथाक्रमं पुत्रौ भवतः। वैश्येन शूद्रायां विन्नायां करणो नाम पुत्रो भवति। एष सवर्णमूर्धावसिक्तादिसंज्ञाविधिः विन्नासूढास्तु स्मृत उक्तो वेदितव्यः। एते च मूर्धावसिक्ताम्बष्ठनिषाद-माहिष्यो-ग्र-करणाः षडनुलोमजाः पुत्रा वेदितव्याः॥ ९२॥

प्रतिलोमजानाह—

ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा।
शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः॥ ९३॥

ब्राह्मण्यां क्षत्रियवैश्यशूद्रैरुत्पादिता यथाक्रमं सूत-वैदेहिक-चण्डालाख्याः पुत्रा भवन्ति। तत्र चण्डालः सर्वधर्मबहिष्कृतः॥ ९३॥

क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च।
शूद्रादायोगवं वैश्या जनयामास वै सुतम्॥ ९४॥

किंच। क्षत्रिया योषित् वैश्यान्मागधं नाम पुत्रं जनयति। सैव शूद्रात्क्षत्तारं पुत्रं जनयति। वैश्ययोषिच्छूद्रादायोगवं पुत्रं जनयति। एते च सूत-वैदेहिक-चण्डाल-मागध-क्षत्ता-ऽयोगवाः षट् प्रतिलोमजाः। एतेषां च वृत्तय औशनसे मानवे च द्रष्टव्याः॥ ९४॥

संकीर्णसंकरजात्यन्तरमाह—

माहिष्येण करण्यां तु रथकारः प्रजायते।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः॥ ९५॥

क्षत्रियेण वैश्यायामुत्पादितो माहिष्यः। वैश्येन शूद्रायामुत्पादिता करणी तस्यां माहिष्येणोत्पादितो रथकारो नाम जात्या भवति। तस्य चोपनयनादि सर्वं कार्यं वचनात्। यथाह शङ्खः—'क्षत्रियवैश्यानुलोमानन्तरोत्पन्नो यो रथकारस्तस्येज्यादानोपनयनसंस्कारक्रिया अश्वप्रतिष्ठारथसूत्रवास्तुविद्याध्ययनवृत्तिता च' इति। एवं ब्राह्मणक्षत्रियोत्पन्नमूर्धावसिक्तमाहिष्याद्यनुलोमसंकरे जात्यन्तरता उपनयनादिप्राप्तिश्च वेदितव्या, तयोर्द्विजातित्वात्। संज्ञास्तु स्मृत्यन्तरोक्ता द्रष्टव्याः। एतच्च प्रदर्शनमात्रमुक्तम्। संकीर्णसंकरजातीनामानन्त्याद्वक्तु-

१ रोत्पन्नजो ख. २ द्विजत्वात् क. ३ जातानां क. ग.

मशक्यत्वात्। अत एतावदत्र विवक्षितं—असन्तः प्रतिलोमजाः सन्तश्चानुलोमजा ज्ञातव्या इति ॥ ९५ ॥

सवर्णेभ्यः सवर्णासु जायन्त इत्यादिना वर्णप्राप्तौ कारणमुक्तम्। इदानीं कारणान्तरमाह—

जात्युत्कर्षो युगे ज्ञेयः सप्तमे[1] पञ्चमेऽपि वा।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥ ९६ ॥

जातयो मूर्धावसिक्ताद्यास्तासामुत्कर्षो ब्राह्मणत्वादिजातिप्राप्तिर्जात्युत्कर्षो युगे जन्मनि सप्तमे पञ्चमे अपिशब्दात्षष्ठे वा बोद्धव्यः। व्यवस्थितश्चायं विकल्पः। व्यवस्था च—ब्राह्मणेन शूद्रायामुत्पादिता निषादी, सा ब्राह्मणेनोढा दुहितरं कांचिज्जनयति, सापि ब्राह्मणेनोढान्यां जनयतीत्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति। ब्राह्मणेन वैश्यायामुत्पादिता अम्बष्ठा। साप्यनेन प्रकारेण पञ्चमी षष्ठं[2] ब्राह्मणं जनयति। मूर्धावसिक्ताप्यनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणमेव जनयति। एवमुग्रा क्षत्रियेणोढा माहिष्या च यथाक्रमं षष्ठं पञ्चमं च क्षत्रियं जनयति। तथा करणी वैश्योढा पञ्चमं वैश्यमित्येवमन्यत्राप्यूहनीयम्। किंच कर्मणां व्यत्यये वृत्त्यर्थानां कर्मणां विपर्यासे यथा ब्राह्मणो मुख्यया[3] वृत्त्या अजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः। तेनाप्यजीवन् वैश्यवृत्त्या। तथाप्यजीवन् शूद्रवृत्त्या। क्षत्रियोऽपि स्वकर्मणा जीवनार्थेनाजीवन् वैश्यवृत्त्या शूद्रवृत्त्या वा। वैश्योपि स्ववृत्त्या अजीवन् शूद्रवृत्त्येति कर्मणां व्यत्ययः। तस्मिन्व्यत्यये सति यद्यापद्विमोक्षेऽपि तां वृत्तिं न परित्यजति तदा सप्तमे[4] षष्ठे पञ्चमे वा जन्मनि साम्यं, यस्य हीनवर्णस्य कर्मणा जीवति तत्समानजातित्वं भवति। तद्यथा। ब्राह्मणः शूद्रवृत्त्या जीवंस्तामपरित्यजन् यदि पुत्रमुत्पादयति सोपि तयैव वृत्त्या जीवन्पुत्रान्तरमित्येवं[5] परम्परया सप्तमे जन्मनि शूद्रमेव जनयति। वैश्यवृत्त्या जीवन् षष्ठे वैश्यम्। क्षत्रियवृत्त्या जीवन् पञ्चमे क्षत्रियम्। क्षत्रियोऽपि शूद्रवृत्त्या जीवन् षष्ठे शूद्रम्। वैश्यवृत्त्या जीवन् पञ्चमे वैश्यम्। वैश्योऽपि शूद्रवृत्त्या जीवंस्तामपरित्यजन्पुत्रपरम्परया पञ्चमे जन्मनि शूद्रं जनयतीति। पूर्ववच्चाधरोत्तरम्। अस्यार्थः—वर्णसंकरे अनुलोमजाः प्रतिलोमजाश्च दर्शिताः। संकीर्णसंकरजाताश्च रथकारनिदर्शनेन दर्शिताः। इदानीं वर्णसंकीर्णसंकरजाताः[6] प्रदर्श्यन्ते। अधरे च उत्तरे च अधरोत्तरं यथा मूर्धावसिक्तायां क्षत्रियवैश्यशूद्रैरुत्पादितास्तथाम्बष्ठायां वैश्यशूद्राभ्यां निषाद्यां शूद्रेणोत्पादिता अधराः प्रतिलोमजास्तथा मूर्धावसिक्ताम्बष्ठानिषादीषु ब्राह्मणेनोत्पादिताः, माहिष्योग्रयोर्ब्राह्मणेन क्षत्रियेण चोत्पादिताः, करण्यां ब्राह्मणेन

१ पञ्चे सप्तमेपि ख. २ सप्तमं क. ३ ब्राह्मणवृत्त्या ग. ४ पञ्चमे षष्ठे सप्तमे ख. ५ पुनरप्येवं ख. ६ वर्णसंकरजाताः ख.

क्षत्रियेण वैश्येन चोत्पादिताः उत्तरे अनुलोमजाः। एवमन्यत्राप्यूहनीयम्। एतदधरोत्तरं पूर्ववदसत्सदिति बोद्धव्यम्॥ ९६॥

इति वर्णजातिविवेकप्रकरणम्।

## अथ गृहस्थधर्मप्रकरणम् ५

श्रौतस्मार्तानि कर्माणि अग्निसाध्यानि दर्शयिष्यन् कस्मिन्नग्नौ किं कर्तव्यमित्याह—

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही।
दायकालाहृते वापि श्रौतं वैतानिकाग्निषु॥ ९७॥

स्मृत्युक्तं वैश्वदेवादिकं कर्म लौकिकं च यत्प्रतिदिनं पाकलक्षणं तदपि गृहस्थो विवाहाग्नौ विवाहसंस्कृते कुर्वीत। दायकाले विभागकाल आहृते वा। 'वैश्यकुलादग्निमानीय' इत्यादिनोक्तसंस्कारसंस्कृते। अपिशब्दात्प्रेते वा गृहपतावाहृते संस्कृते एव। ततश्च कालत्रयातिक्रमे प्रायश्चित्तीयते। श्रुत्युक्तमग्निहोत्रादिकं कर्म वैतानिकाग्निषु आहवनीयादिषु कुर्वीत॥ ९७॥

गृहस्थधर्मानाह—

शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः।
प्रातःसंध्यामुपासीत दन्तधावनपूर्वकम्॥ ९८॥

शरीरचिन्तामावश्यकादिकां 'दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः' इत्याद्युक्तविधिना निर्वर्त्य 'गन्धलेपक्षयकरम्' इत्यादिनोक्तेन विधिना कृतशौचविधिर्द्विजः दन्तधावनपूर्वकं प्रातःसंध्यामुपासीत। दन्तधावनविधिश्च—'कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलसंमितम्। कनिष्ठिकाग्रवत्स्थूलं पर्वार्धकृतकूर्चकम्॥ दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा॥' इति। अत्र वृक्षोत्थमित्यनेन तृणलोष्टाङ्गुल्यादिनिषेधः। पलाशाश्वत्थादिनिषेधश्च स्मृत्यन्तरोक्तो द्रष्टव्यः। दन्तधावनमन्त्रश्च—'आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च। ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते॥' इति। ब्रह्मचारिप्रकरणोक्तस्यापि संध्यावन्दनस्य पुनर्वचनं दन्तधावनपूर्वकत्वप्रतिपादनार्थम्, दन्तधावननृत्यगीतादि ब्रह्मचारी वर्जयेदिति तन्निषेधात्॥ ९८॥

हुत्वाग्नीन्सूर्यदैवत्यान्जपेन्मन्त्रान्समाहितः।
वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च॥ ९९॥

प्रातःसंध्यावन्दनानन्तरं अग्नीनाहवनीयादीन् यथोक्तेन विधिना हुत्वा औ-

१ अहृत आहितः. २ तिक्रमेण प्राय. ग. ३ आवश्यकां दिवा. क. ४ नो धेहि ग.

पासनाग्निं वा । तदनन्तरं सूर्यदैवत्यान् 'उदुत्यं जातवेदसम्' इत्यादीन्मन्त्रान्जपेत् । समाहितोऽविक्षिप्तचित्तः । तदनन्तरं वेदार्थान्निरुक्तव्याकरणादींश्च[1] श्रवणेनाधिगच्छेज्जानीयात् । चकारादधीतं चाभ्यसेत् । विविधानि च शास्त्राणि मीमांसाप्रभृतीनि धर्मार्थारोग्यप्रतिपादकान्यधिगच्छेत् ॥ ९९ ॥

उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ।
स्नात्वा देवान्पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥ १०० ॥

तदनन्तरमीश्वरमभिषेकादिगुणयुक्तमन्यं वा श्रीमन्तमकुत्सितं योगक्षेमार्थसिद्धये । अलब्धलाभो योगः लब्धपरिपालनं क्षेमं[2] तदर्थमुपेयादुपासीत । उपेयादित्यनेन सेवां प्रतिषेधति । वेतनग्रहणेनाज्ञाकरणं सेवा । तस्याः श्ववृत्तित्वेन निषेधात्, ('सेवा[3]श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्' इति मनुस्मरणात्) । ततो मध्याह्ने शास्त्रोक्तविधिना नद्यादिषु स्नात्वा देवान्स्वगृह्योक्तान् पितॄंश्च चकारादृषींश्च देवादितीर्थेन तर्पयेत् । तदनन्तरं गन्धपुष्पाक्षतैः हरिहरहिरण्यगर्भप्रभृतीनामन्यतमं यथावासनमृग्यजुःसाममन्त्रैस्तत्प्रकाशकैः स्वनामभिर्वा चतुर्थ्यन्तैर्नमस्कारयुक्तैराराधयेद्यथोक्तविधिना ॥ १०० ॥

वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥ १०१ ॥

तदनन्तरं वेदाथर्वेतिहासपुराणानि[4] समस्तानि व्यस्तानि वा । आध्यात्मिकीं च विद्यां जपयज्ञसिद्ध्यर्थं यथोक्तेन विधिना यथाशक्ति जपेत् ॥ १०१ ॥

बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः ।
भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥ १०२ ॥

बलिकर्म भूतयज्ञः । स्वधा पितृयज्ञः । होमो देवयज्ञः । स्वाध्यायो ब्रह्मयज्ञः । अतिथिसत्क्रिया मनुष्ययज्ञः । एते पञ्च महायज्ञा अहरहः कर्तव्याः नित्यत्वात् । यत्पुनरेषां फलश्रवणं तदेषां पावनत्वख्यापनार्थं न काम्यत्वप्रतिपादनाय ॥ १०२ ॥

देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत् ।
अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निक्षिपेत् ॥ १०३ ॥

स्वगृह्योक्तविधिना वैश्वदेवहोमं[5] कृत्वा तदवशिष्टेनान्नेन भूतेभ्यो बलिं हरेत् । अन्नग्रहणमपक्वव्युदासार्थम् । तदनन्तरं यथाशक्ति भूमावन्नं श्वचाण्डालवायसेभ्यो निक्षिपेत् । चशब्दात्कृमिपापरोगिपतितेभ्यः । यथाह मनुः (३।९२)—'शुनां च पतितानां च श्वपचां पापरोगिणाम् । वायसानां कृ-

१ करणादिश्रवणेनाधि. ख. २ क्षेमस्तदर्थं ग. ३ सेवेत्याद्यधिकं क. ग. पुस्तकयोः. ४ थर्वपुराणेतिहासादीनि कृत्वा क. ५ वैश्वदेवं कृत्वा क.

च शनकैर्निक्षिपेद्भुवि ॥' इति। एतच्च सायंप्रातः कर्तव्यम्। 'अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयात्' इत्याश्वलायनस्मरणात्। इह केचिद्वैश्वदेवाख्यस्य कर्मणः पुरुषार्थत्वमन्नसंस्कारकर्मत्वं चेच्छन्ति—'अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयादित्यन्नसंस्कारकर्मता प्रतीयते। अथातः पञ्च महायज्ञा इत्युपक्रम्य तानेतान्यज्ञानहरहः कुर्वीतेति नित्यत्वाभिधानात्पुरुषार्थत्वं चावगम्यत' इति। तदयुक्तम्। पुरुषार्थत्वेऽन्नसंस्कारकर्मत्वानुपपत्तेः। तथाहि। द्रव्यसंस्कारकर्मत्वपक्षेऽन्नार्थता वैश्वदेवकर्मणः, पुरुषार्थत्वे वैश्वदेवकर्मार्थता द्रव्यस्येति परंस्परविरोधात्पुरुषार्थत्वमेव युक्तम्।—'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इति। तथा—'वैश्वदेवे तु निर्वृत्ते यदन्योऽतिथिराव्रजेत्। तस्मा अन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥' इति (३।१०८) मनुस्मरणात्। पुरुषार्थत्वे वैश्वदेवाख्यं कर्म न प्रतिपाकमावर्तनीयम्। तस्मादथ सायंप्रातरित्यादिनोत्पत्तिप्रयोगौ दर्शितौ, तानेतान्यज्ञानहरहः कुर्वीतेत्यधिकारविधिरिति सर्वमनवद्यम् ॥ १०३ ॥

अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम्।
स्वाध्यायं[2] सततं कुर्यान्न पचेदन्नमात्मने ॥ १०४ ॥

प्रत्यहमन्नं पितृभ्यो मनुष्येभ्यश्च यथाशक्ति देयम्। अन्नाभावे कन्दमूलफलादि। तस्याप्यभावे जलं देयं अपिशब्दात्। स्वाध्यायं सततं कुर्यादविस्मरणार्थम्। न पचेदन्नमात्मार्थम्। अन्नग्रहणं सकलादनीयद्रव्यप्रदर्शनार्थम्। कथं तर्हि। देवताद्युद्देशेनैव ॥ १०४ ॥

बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः।
संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥ १०५ ॥

परिणीता पितृगृहे स्थिता स्ववासिनी। शेषाः प्रसिद्धाः। बालादीनतिथिभृत्यांश्च संभोज्य भोजयित्वा दम्पत्योः शेषभोजनं कर्तव्यम्। '[3]प्राणाग्निहोत्रविधिनाश्नीयादन्नमनापदि। मतं विपक्कं विहितं भक्षणं प्रीतिपूर्वकम् ॥' ॥ १०५ ॥

आपोशनेनोपरिष्टादधस्तादश्नता तथा।
अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥ १०६ ॥

भुञ्जानेन द्विजन्मना उपरिष्टादधस्ताच्चापोशनाख्येन कर्मणान्नमनग्नममृतं च कार्यम्। द्विजन्मग्रहणमुपनयनप्रभृति सर्वाश्रमसाधारणार्थम् ॥ १०६ ॥

अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः।
अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥ १०७ ॥

वैश्वदेवानन्तरं वर्णानां ब्राह्मणादीनामतिथित्वेन युगपत्प्राप्तानां ब्राह्मणाद्यानुपूर्व्येण यथाशक्ति देयम्। सायंकालेऽपि यद्यतिथिरागच्छति तदासावप्रणोद्यो-

१ एतेन काम्यत्वमपि प्रतिपादितं भवति. २ चान्वहं कुर्यात् ख. ३ प्राणेत्याद्यधिकं क. पुस्तके.

ऽप्रत्याख्येय एव। यद्यप्यदनीयं किमपि नास्ति तथापि वाग्भूतृणोदकैरपि सत्कारं कुर्यात्। यथाह मनुः(४।१०१)—'तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता। एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥' इति॥ १०७॥

सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च।
भोजयेच्चागतान्काले सखिसंबन्धिबान्धवान्॥ १०८॥

भिक्षवे सामान्येन भिक्षा दातव्या। सुव्रताय ब्रह्मचारिणे यतये च सत्कृत्य स्वस्तिवाच्य भिक्षादानमपूर्वमित्यनेन विधिना भिक्षा दातव्या। भिक्षा च ग्राससंमिता। ग्रासश्च मयूराण्डपरिमाणः।—'ग्रासमात्रा भवेद्भिक्षा पुष्कलं तच्चतुर्गुणम्। हंतस्तु तैश्चतुर्भिः स्यादग्रं तत्त्रिगुणं भवेत्॥' इति शातातपस्मरणात्। भोजनकाले चागतान्सखिसंबन्धिबान्धवान्भोजयेत्। सखायो मित्राणि। संबन्धिनो येभ्यः कन्या गृहीता दत्ता वा। मातृपितृसंबन्धिनो[2] बान्धवाः॥ १०८॥

महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्।
सत्क्रियान्वासनं स्वादु भोजनं सूनृतं वचः॥ १०९॥

महान्तमुक्षाणं धौरेयं महाजं वा श्रोत्रियायोक्तलक्षणायोपकल्पयेत् भवदर्थमयमस्माभिः परिकल्पित इति तत्प्रीत्यर्थं नतु दानाय व्यापादनाय वा। यथा सर्वमेतद्भवदीयमिति। प्रतिश्रोत्रियमुक्षासंभवात्। 'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्नतु' इति निषेधाच्च। तस्मात्सत्क्रियैव[3] कर्तव्या। सत्क्रिया स्वागतवचनासनपाद्यार्घ्याचमनादिदानम्। तस्मिन्नुपविष्टे पश्चादुपवेशनमन्वासनम्। स्वादु भोजनं मिष्टमशनम्। सूनृतं वचः धन्या वयमद्य भवदागमनादित्येवमादि। अश्रोत्रिये पुनः 'अश्रोत्रियस्योदकासने' इति गौतमोक्तं वेदितव्यम्॥ १०९॥

प्रतिसंवत्सरं त्वर्घ्याः स्नातकाचार्यपार्थिवाः।
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः॥ ११०॥

स्नातको विद्यास्नातकः व्रतस्नातकः विद्याव्रतस्नातक इति। ([4]समाप्य वेदमसमाप्य व्रतं यः समावर्तते स विद्यास्नातकः। समाप्य व्रतमसमाप्य वेदं यः समावर्तते स व्रतस्नातकः। उभयं समाप्य यः समावर्तते स विद्याव्रतस्नातकः।) आचार्य उक्तलक्षणः। पार्थिवो वक्ष्यमाणलक्षणः। प्रियो मित्रं। विवाह्यो जामाता। चकाराच्छ्वशुरपितृव्यमातुलादीनां ग्रहणम्। 'ऋत्विजो वृत्वा मधुपर्कमाहरेत्स्नातकायोपस्थिताय राज्ञे चाचार्याय च श्वशुरपितृव्यमातुलानां च' इत्याश्वलायनस्मरणात्। एते स्नातकादयः प्रतिसंवत्सरं गृहमागता अर्घ्याः मधुपर्केण

१ यथाहेत्यादि मनुवचनं क. ग. नैवास्ति. २ संबद्धा बान्धवाः क. ३ यावेव कर्तव्यं. ग. ४ धनुश्चिह्नगो भागः क ग. नास्ति.

वन्दितव्याः। अर्घशब्दो मधुपर्कं लक्षयति। ऋत्विजश्चोक्तलक्षणाः संवत्सरादर्वागपि प्रतियज्ञं मधुपर्केण संपूज्याः॥ ११०॥

**अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः।**
**मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः॥ १११॥**

अध्वनि वर्तमानोऽतिथिर्वेदितव्यः। श्रोत्रियवेदपारगावध्वनि वर्तमानौ ब्रह्मलोकमभीप्सतो गृहस्थस्य मान्यावतिथी वेदितव्यौ। यद्यप्यध्ययनमात्रेण श्रोत्रियस्तथापि श्रुताध्ययनसंपन्नोऽत्र श्रोत्रियोऽभिधीयते। एकशाखाध्यापनक्षमो[1] वेदपारगः॥ १११॥

**परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते।**
**वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम्॥ ११२॥**

परपाके रुचिर्यस्यासौ तथोक्तः परपाकरुचिः। नैव परपाकरुचिः स्यात्। अनिन्द्येनामन्त्रणंविना। 'अनिन्द्येनामन्त्रितो नापक्रामेत्' इति स्मरणात्। वाक्पाणिपादचापल्यं वाक्च पाणी च पादौ च वाक्पाणिपादं तस्य चापल्यं वर्जयेत्। वाक्चापल्यमसभ्यानृतादिभाषणम्। पाणिचापल्यं वल्गनास्फोटनादि[2]। पादचापल्यं लङ्घनोत्प्लवनादि। चकारान्नेत्रादिचापल्यं च वर्जयेत्।—'न शिश्नोदरपाणिपादचक्षुर्वाक्चापलानि कुर्यात्' इति गौतमस्मरणात्। तथा अतिभोजनं च वर्जयेत्। अनारोग्यहेतुत्वात्॥ ११२॥

**अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत्।**
**अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः॥ ११३॥**

पूर्वोक्तं श्रोत्रियातिथिं वेदपारगातिथिं च भोजनादिना तृप्तं सीमान्तं यावदनुव्रजेत्। ततो भोजनानन्तरमहःशेषं शिष्टैरितिहासपुराणादिवेदिभिः, इष्टैः काव्यकथाप्रपञ्चचतुरैः, बन्धुभिश्चानुकूलालापकुशलैः सहासीत॥ ११३॥

**उपास्य पश्चिमां संध्यां हुत्वाग्नींस्तानुपास्य च।**
**भृत्यैः परिवृतो भुक्त्वा नातितृप्याथ संविशेत्॥ ११४॥**

ततः पूर्वोक्तेन विधिना पश्चिमां संध्यामुपास्य आहवनीयादीनग्नीनग्निं[3] वा हुत्वा तानुपास्योपस्थाय भृत्यैः पूर्वोक्तैः स्ववासिन्यादिभिः परिवृतो नातितृप्य भुक्त्वा चकारादायव्ययादिगृहचिन्तां निर्वर्त्यानन्तरं संविशेत्स्वप्यात्॥ ११४॥

**ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम्।**
**धर्मार्थकामान्स्वे काले यथाशक्ति न हापयेत्॥ ११५॥**

ततो ब्राह्मे मुहूर्ते उत्थाय पश्चिमेऽर्धप्रहरे प्रबुध्यात्मनो हितं कृतं करिष्यमाणं च वेदार्थसंशयांश्च चिन्तयेत्। तदानीं चित्तस्याव्याकुलत्वेन तत्त्वप्रतिभा-[4]

---

१ अध्ययनक्षमो ख. २ पल्याण ख. ३ अग्निमग्नीन्वा ख. ४ प्रतिभासन ख.

नयोग्यत्वात्। ततो धर्मार्थकामान्स्वोचितकाले यथाशक्ति न परित्यजेत्। यथासंभवं सेवेतेत्यर्थः। पुरुषार्थत्वात्। यथाह गौतमः—'न पूर्वाह्णमध्याह्नापराह्णानफलान्कुर्यात् धर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्यात्' इति। अत्र यद्यप्येतेषां सामान्येन सेवनमुक्तं तथापि कामार्थयोर्धर्माविरोधेनानुष्ठानं तयोर्धर्ममूलत्वादेवं प्रतिदिनमनुष्ठेयम्॥ ११५॥

**विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम्।**
**एतैः प्रभूतैः शूद्रोऽपि वार्धके मानमर्हति॥ ११६॥**

विद्या पूर्वोक्ता, कर्म श्रौतं स्मार्तं च, वयः आत्मनोऽतिरिक्तं सप्तत्या वा ऊर्ध्वं, बन्धुः स्वजनसंपत्तिः, वित्तं अमरत्नादिकं एतैर्युक्ताः क्रमेण मान्याः पूजनीयाः। एतैर्विद्याकर्मबन्धुवित्तैः प्रभूतैः प्रवृद्धैः समस्तैर्व्यस्तैर्वा युक्तः शूद्रोऽपि वार्धके अशीतेरूर्ध्वं मानमर्हति। 'शूद्रोऽप्यशीतिको वरः' इति गौतमस्मरणात्॥ ११६॥

**वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम्।**
**पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः॥ ११७॥**

वृद्धः पक्वकेशः[2] प्रसिद्धः। भारी भाराक्रान्तः। नृपो[3] भूपतिः न क्षत्रियमात्रम्। स्नातो विद्याव्रतोभयस्नातकः। स्त्री प्रसिद्धा। रोगी व्याधितः। वरो विवाहोद्यतः। चक्री शाकटिकः। चकारान्मत्तोन्मत्तादीनां ग्रहणम्।—'बालवृद्धमत्तोन्मत्तोपहतदेहभाराक्रान्तस्त्रीस्नातकप्रव्रजितेभ्यः' इति शङ्खस्मरणात्। एतेभ्यः पन्था देयः। एतेष्[4]वभिमुखायातेषु स्वयं पथोपक्रामेत्। वृद्धादीनां राज्ञा सह पथि समवाये राजा मान्य इति तस्मै पन्था देयः। भूपतेरपि स्नातको मान्यः। स्नातकग्रहणं स्नातकमात्रप्राप्त्यर्थं न ब्राह्मणाभिप्रायेण। तस्य सदैव गुरुत्वात्। यथाह शङ्खः—'अथ ब्राह्मणायाग्रे पन्था देयो राज्ञ इत्येके। तच्चानिष्टं गुरुर्ज्येष्ठश्च ब्राह्मणो राजानमतिशेते तस्मै पन्था' इति। वृद्धादीनां पथि परस्परसमवाये वृद्धतराद्यपेक्षया विद्यादिभिर्वा विशेषो द्रष्टव्यः॥ ११७॥

**इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च।**
**प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा॥ ११८॥**

वैश्यस्य क्षत्रियस्य च चकाराद्ब्राह्मणस्य द्विजानुलोमानां च यागाध्ययनदानानि साधारणानि कर्माणि। ब्राह्मणस्याधिकानि प्रतिग्रहयाजनाध्यापनानि। तथेति स्मृत्यन्तरोक्तवृत्त्युपसंग्रहः। यथाह गौतमः—'कृषिवाणिज्ये वा स्वयं कृते कुसीदं च' इति। अध्यापनं तु क्षत्रियवैश्ययोर्ब्राह्मणप्रेरितयोर्भवति न स्वेच्छया।—'आपत्काले ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषा, समाप्ते ब्राह्मणो गुरुः' इति गौतमस्मरणात्। एतान्यनापदि ब्राह्मणस्य षट् कर्माणि।

---

१ बन्धुर्बहुस्वजन. ग. २ पक्वशरीरः ख. ३ नृपो राजा न क. ४ ष्वाभिमुख्यागतेषु ख.

तत्र त्रीणीज्यादीनि धर्मार्थानि। त्रीणि प्रतिग्रहादीनि वृत्त्यर्थानि।—'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥' इति (१०।७६) मनुस्मरणात्। अत इज्यादीन्यवश्यं कर्तव्यानि न प्रतिग्रहादीनि। 'द्विजातीनामध्ययनमिज्या दानं, ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः पूर्वेषु नियमः' इति गौतमस्मरणात्॥ ११८॥

**प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्।**
**कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम्॥ ११९॥**

क्षत्रियस्य प्रजापालनं प्रधानं कर्म धर्मार्थं वृत्त्यर्थं च। वैश्यस्य कुसीदकृषिवाणिज्यपशुपालनानि वृत्त्यर्थानि कर्माणि। कुसीदं वृद्ध्यर्थं द्रव्यप्रयोगः। लाभार्थं क्रयविक्रयौ वाणिज्यम्। शेषं प्रसिद्धम्।—'शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक् पशुकृषी विशः। आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः॥' इति (१०।७९) मनुस्मरणात्॥ ११९॥

**शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत्।**
**शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्॥ १२०॥**

शूद्रस्य द्विजशुश्रूषा प्रधानं कर्म धर्मार्थं वृत्त्यर्थं च। तत्र ब्राह्मणशुश्रूषा परमो धर्मः।—'विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते' इति (१०।१२३) मनुस्मरणात्। यदा पुनर्द्विजशुश्रूषया जीवितुं न शक्नोति तदा वणिग्वृत्त्या जीवेत्। नानाविधैर्वा शिल्पैर्द्विजातीनां हितं कुर्वन्। यादृशैः कर्मभिर्द्विजातिशुश्रूषायामयोग्यो न भवति तादृशानि कर्माणि कुर्वन्नित्यर्थः। तानि च देवलोक्तानि—'शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदङ्गवादनादीनि'॥ १२०॥

**भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः[1]।**
**नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्॥ १२१॥**

किंच भार्यायामेव न साधारणस्त्रीषु परस्त्रीषु वा रतिरभिगमनं यस्य स तथोक्तः। शुचिः बाह्याभ्यन्तरशौचयुक्तः। द्विजवत् भृत्यादिभर्ता। श्राद्धक्रियारतः श्राद्धानि नित्यनैमित्तिककाम्यानि, क्रियाः स्नातकव्रतान्यविरुद्धानि तेषु रतः। नम इत्यनेन मन्त्रेण पूर्वोक्तान्पञ्चमहायज्ञानहरहर्न हापयेदनुतिष्ठेत्। नमस्कारमन्त्रं च केचित्—'देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वाहायै स्वधायै नित्यमेव नमोनमः॥' इति वर्णयन्ति। नम इत्यन्ये। तत्र वैश्वदेवं लौकिकेऽग्नौ कर्तव्यं न वैवाहिकेऽग्नावित्याचार्याः॥ १२१॥

इदानीं साधारणधर्मानाह—

**अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।**
**दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्॥ १२२॥**

---

१ क्रियापरः ख.

हिंसा प्राणिपीडा तस्या अकरणमहिंसा। सत्यमप्राणिपीडाकरं यथार्थवच[1]नम्। अस्तेयमदत्तानुपादानम्। शौचं बाह्यमाभ्यन्तरं च। बुद्धिकर्मेन्द्रियाणां नियतविषयवृत्तितेन्द्रियनिग्रहः। यथाशक्ति प्राणिनामन्नोदकादिदानेनार्तिपरिहारो दानम्। अन्तःकरणसंयमो दमः। आपन्नरक्षणं दया। अपकारेऽपि चित्तस्याविकारः क्षान्तिः। एते सर्वेषां पुरुषाणां ब्राह्मणाद्याचण्डालं धर्मसाधनम्॥ १२२॥

**वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम्।**
**आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा॥ १२३॥**

वयो बाल्ययौवनादि। बुद्धिर्नैसर्गिकी लौकिकवैदिकव्यवहारेषु[2]। अर्थो वित्तं गृहक्षेत्रादि। वाक् कथनम्[3]। वेषो वस्त्रमाल्यादिविन्यासः। श्रुतं पुरुषार्थशास्त्रश्रवणम्। अभिजनः कुलम्। कर्म वृत्त्यर्थं प्रतिग्रहादि। एतेषां वयःप्रभृतीनां सदृशीमुचितां वृत्तिमाचरणं आचरेत्स्वीकुर्यात्। यथा वृद्धः स्वोचितां न यौवनोचिताम्। एवं बुद्ध्यादिष्वपि योज्यम्। अजिह्मामवक्राम्। अशठाममत्सराम्॥ १२३॥

एवं स्मार्तानि कर्माण्यनुक्रम्येदानीं श्रौतानि कर्माण्यनुक्रामति—

**त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः।**
**प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत्॥१२४॥**

त्रिवर्षजीवनपर्याप्तं त्रैवार्षिकं अधिकं वा अन्नं यस्य स एव सोमपानं[4] कुर्यान्न ततोऽल्पधनः। (मनुः ११।८)—'अतः स्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः। स पीतसोमपूर्वोऽपि न तस्याप्नोति तत्फलम्॥' इति दोषश्रवणात्। एतच्च काम्याभिप्रायेण। नित्यस्य चावश्यकर्तव्यत्वान्न नियमः। यस्य वर्षजीवनपर्याप्तमन्नं भवति स प्राक्सौमिकीः सोमात्प्राक् प्राक्सोमं प्राक्सोमंभवाः प्राक्सौमिक्यः। कास्ताः। अग्निहोत्रदर्शपूर्णमासाग्रयणपशुचातुर्मास्यानि[5] कर्माणि तद्विकाराश्चैताः क्रियाः कुर्यात्॥ १२४॥

एवं काम्यानि[6] श्रौतानि कर्माण्यभिधायेदानीं नित्यान्याह—

**प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा।**
**कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि॥ १२५॥**

संवत्सरे संवत्सरे सोमयागः कार्यः। पशुः प्रत्ययनं अयने अयने दक्षिणोत्तरसंज्ञिते निरूढपशुयागः कार्यः। तथा प्रतिसंवत्सरं वा।—'पशुना संवत्सरे संवत्सरे यजेत षट्सु षट्सु वा मासेष्वित्येके' इति श्रवणात्। आग्रयणेष्टिश्च सस्योत्पत्तौ कर्तव्या। चातुर्मास्यानि च प्रतिसंवत्सरं कर्तव्यानि॥ १२५॥

**एषामसंभवे कुर्यादिष्टिं वैश्वानरीं द्विजः।**

---

१ आचाण्डालान्तं ख. २ व्यवहारेषु ज्ञानं क. ३ वचनम् ग. ४ सोमयागं क. ग. ५ पूर्णमासपशु ख. पूर्णमासचातुर्मास्यानि ग. ६ काम्यानि क.

**हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् ॥ १२६ ॥**

एषां सोमप्रभृतीनां पूर्वोक्तानां नित्यानां कथंचिदसंभवे तत्काले वैश्वानरीमिष्टिं कुर्यात्। किंच योयं हीनकल्प उक्तः सति द्रव्येऽसौ न कर्तव्यः। यच्च फलप्रदं काम्यं तद्धीनकल्पं न कुर्वीत न कर्तव्यमेव ॥ १२६ ॥

**चण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात्।**
**यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेत् ॥ १२७ ॥**

यज्ञार्थं शूद्रधनयाचनेन जन्मान्तरे चण्डालो जायते। यः पुनर्यज्ञार्थं याचितं न सर्वं प्रयच्छति न त्यजति स भासः काकोपि वा वर्षशतं भवेत्। यथाह मनुः (११।२५)—'यज्ञार्थमर्थं भिक्षित्वा यः सर्वं न प्रयच्छति। स याति भासतां विप्रः काकतां वा शतं समाः॥' इति। भासः शकुन्तः। काकः प्रसिद्धः॥ १२७॥

**कुशूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा।**

कुशूलं कोष्ठकं, कुम्भी उष्ट्रिका, कुशूलं च कुम्भी च कुशूलकुम्भ्यौ ताभ्यां परिमितं धान्यं यस्य स तथोक्तः कुशूलधान्यः स्यात्कुम्भीधान्यो वा। तत्र स्वकुटुम्बपोषणे द्वादशाहमात्रपर्याप्तं धान्यं यस्यास्ति स कुशूलधान्यः। कुम्भीधान्यस्तु स्वकुटुम्बपोषणे षडहमात्रपर्याप्तधान्यः। त्र्यहपर्याप्तं धान्यमस्यास्तीति त्र्याहिकः। श्वोभवं धान्यमस्यास्तीति श्वस्तनः। न विद्यते श्वस्तनं यस्य सोऽश्वस्तनः॥

कुशूलधान्यादिसंचयोपायमाह—

**जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः ॥ १२८ ॥**

शाल्यादिनिपतितपरित्यक्तवल्लरीग्रहणं शिलम्[२]। एकैकस्य परित्यक्तस्य कणस्योपादानमुञ्छः, शिलं चोञ्छश्च शिलोञ्छं तेन शिलेनोञ्छेन वा। कुशूलधान्यादिश्चतुर्विधो गृहस्थो जीवेत्। एषां कुशूलधान्यादीनां ब्राह्मणानां[३] गृहस्थानां चतुर्णां परः परः पश्चात्पश्चात्पठितः श्रेयान्[४]प्रशस्यतरः। एतच्च यद्यपि द्विजः प्रकृतस्तथापि[५] ब्राह्मणस्यैव भवितुमर्हति विघोपशमादियोगात्। तथाच मनुना (४।२)—'अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः। या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि॥' इति विप्रमेव प्रस्तुत्य[६] (मनुः ४।७)—'कुशूलधान्यको वा स्यात्कुम्भीधान्यक एव वा' इत्याद्यभिहितत्वात्। एतच्चानतिसंयतं[७] यायावरं प्रत्युच्यते न विप्रमात्राभिप्रायेण। तथा सति—'त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः' इत्यनेन न विरोधः। तथाच गृहस्थानां द्वैविध्यं तत्र तत्रोक्तम्। यथाह देवलः—'द्विविधो गृहस्थो यायावरः शालीनश्च। तयोर्यायावरः प्रवरो याजनाध्यापनप्रतिग्रहरिक्थसंचयवर्जनात्। षट्कर्माधिष्ठितः प्रेष्य-

---

१ न परित्यजति क. २ शाल्यादेर्निपतित. क. ३ ब्राह्मणानां चतुर्णां ख. ४ श्रेयानुत्कृष्टतमः ख. ५ प्रकृतः प्रकरणप्राप्तः. प्राकृतः ख. ६ पुरस्कृत्य क. ७ नतिसंपन्नसंयतं क.

चतुष्पदगृहग्रामधनधान्ययुक्तो लोकानुवर्ती शालीनः' इति । शालीनोऽपि चतुर्विधः । याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यैः षड्भिर्जीवत्येकः । याजनादिभिस्त्रिभिरन्यः । याजनाध्यापनाभ्यामपरः । चतुर्थस्त्वध्यापनेनैव । तथाह मनुः(४।९)—'षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते । द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥' इति । अत्र च 'प्रतिग्रहोऽधिको विप्रे' इत्यादिना शालीनस्य वृत्तयो दर्शिताः । यायावरस्य जीवेद्वापि शिलोञ्छेनेति ॥ १२८ ॥

इति गृहस्थधर्मप्रकरणम् ।

## अथ स्नातकधर्मप्रकरणम् ६

एवं श्रौतस्मार्तानि कर्माण्यभिधायेदानीं गृहस्थस्य स्नानादारभ्य ब्राह्मणस्यावश्यकर्तव्यानि विधिप्रतिषेधात्मकानि मानससंकल्परूपाणि स्नातकव्रतान्याह—

न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः ।
न विरुद्धप्रसङ्गेन संतोषी च भवेत्सदा ॥ १२९ ॥

ब्राह्मणस्य प्रतिग्रहादयोऽर्थप्राप्त्युपाया दर्शितास्तत्र विशेष उच्यते । स्वाध्यायविरोधिनमर्थमप्रतिषिद्धमपि नेहेत नान्विच्छेत् । न यतस्ततः न यतःकुतश्चिदविदिताचारात् । न विरुद्धप्रसंगेन विरुद्धमयाज्ययाजनादि, प्रसंगो नृत्यगीतादिः । विरुद्धं च प्रसंगश्च विरुद्धप्रसंगं तेन । नार्थमीहेतेति संबध्यते । नञ आवृत्तिः प्रत्येकं पर्युदासार्था । सर्वत्राप्यस्मिन्स्नातकप्रकरणे नञ्शब्दः प्रत्येकं पर्युदासार्थ एव । किंच अर्थालाभेऽपि संतोषी परितृप्तो भवेत् चकारात्संयतश्च । 'संतोषं परमास्थाय सुखार्थी संयतो भवेत्' इति (४।१२) मनुस्मरणात् १२९

कुतस्तर्हि धनमन्विच्छेदित्याह—

राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ।
दम्भिहैतुकपाखण्डिबकवृत्तींश्च वर्जयेत् ॥ १३० ॥

क्षुधा सीदन्पीड्यमानः स्नातकः राज्ञो विदितवृत्तान्तात्, अन्तेवासिनो वक्ष्यमाणलक्षणात्, याज्यात् याजनार्हाच्च धनमाददीत । क्षुधा सीदन्नित्यनेन विभागादिप्राप्तकुटुम्बपोषणपर्याप्तधनो न कुतश्चिदर्थमन्विच्छेदिति गम्यते । किंच दम्भिहैतुकादीन्सर्वकार्येषु लौकिकवैदिकशास्त्रीयेषु वर्जयेत् । चकाराद्विकर्मस्थबैडालव्रतिकान्शठान्वर्जयेत् । यथाह मनुः (४।३०)—'पाखण्डिनो विकर्मस्थान्बैडालव्रतिकान्शठान् । हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥' इति । लोकरञ्जनार्थमेव कर्मानुष्ठायी दम्भी । युक्तिबलेन सर्वत्र संशयकारी हैतुकः । त्रैविद्यविरुद्धपरिगृहीताश्रमिणः पाखण्डिनः । बकवदस्य वर्तनमिति बकवृत्तिः । यथाह मनुः—'अधोदृष्टिर्नैष्कृतिकः[3] स्वार्थसाधनतत्परः । शठो मि-

---

१ कुतश्चिद्धनमन्वि. क. २ वृत्तिकशठान क. ग. ३ नैष्कृतिकः ख.

श्याविनीतश्च बकवृत्तिरुदाहृतः ॥' इति । प्रतिषिद्धसेविनो विकर्मस्थाः । बिडालो मार्जारस्तस्य व्रतं स्वभावो यस्यासौ बैडालव्रतिकः । तस्य लक्षणमाह मनुः (४।१९५)—'धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः । बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधकः ॥' इति । शठः सर्वत्र वक्रः । एतैः संसर्गनिषेधादेव स्वयमेवंभूतो न भवेदिति गम्यते ॥ १३० ॥

शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः ।
न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ १३१ ॥

किंच । शुक्ले धौते अम्बरे वाससी धरतीति शुक्लाम्बरधरः । केशाश्च श्मश्रूणि च नखाश्च केशश्मश्रुनखं नीचं निकृत्तं[1] केशश्मश्रुनखं यस्यासौ तथोक्तः । शुचिरन्तर्बहिश्च स्नानानुलेपनधूपस्रगादिभिः सुगन्धी च भवेत् । यथाह गौतमः—'स्नातको नित्यं शुचिः सुगन्धिः स्नानशीलः' इति । सुगन्धित्वविधानादेव निर्गन्धमाल्यस्य निषेधः । तथाच गोभिलः—'नागन्धां स्रजं धारयेदन्यत्र हिरण्यरत्नस्रजः' इति । सदा स्नातक एवंभूतो भवेत् । एतच्च सति संभवे।—'न जीर्णमलवद्वासा भवेच्च विभवे सति' इति स्मरणात्। नच भार्यादर्शने तस्यां पुरतोऽवस्थितायामश्नीयात् । अवीर्यवदपत्योत्पत्तिभयात् । तथाच श्रुतिः—'जायाया अन्ते नाश्नीयादवीर्यवदपत्यं भवति' इति । अतस्तया सह भोजनं दूरादेव निरस्तम् । न चैकवासाः न संस्थितः उत्थितः अश्नीयादिति संबध्यते ॥ १३१ ॥

न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ।
नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषी ॥ १३२ ॥

किंच । कदाचिदपि संशयं प्राणविपत्तिसंशयावहं कर्म न प्रपद्येत न कुर्यात् । यथा व्याघ्रचौराद्युपहतदेशाक्रमणादि । अकस्मान्निष्कारणं कंचिदपि पुरुषं स्त्रियं वा अप्रियमुद्वेगकरं वाक्यं न वदेत् ।[1]न चाहितं नानृतं वा प्रियमपि । चकारादश्लीलमसभ्यं बीभत्सकरं चाकस्मान्न वदेदिति संबध्यते । एतच्च परिहासादिव्यतिरेकेण ।—'गुरुणापि समं हास्यं कर्तव्यं कुटिलं विना' इति स्मरणात् । नच स्तेनः अन्यदीयस्यादत्तस्य ग्रहीता न स्यात् । न वार्धुषी स्यात् । प्रतिषिद्धवृद्ध्युपजीवी वार्धुषी ॥ १३२ ॥

दाक्षायणी ब्रह्मसूत्री वेणुमान्सकमण्डलुः ।
कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ १३३ ॥

किंच दाक्षायणं सुवर्णं तदस्यास्तीति दाक्षायणी । ब्रह्मसूत्रं यज्ञोपवीतं तदस्यास्तीति ब्रह्मसूत्री । वैणवयष्टिमान्[2] । कमण्डलुमान् । स्यादिति सर्वत्र संबन्धनीयम् । अत्रच ब्रह्मचारिप्रकरणोक्तस्यापि यज्ञोपवीतस्य पुनर्वचनं द्वितीयप्रा-

---

१ परुषमप्रियं ख. २ तद्वान्, तद्धारणात् क.

ह्यर्थम् । यथाह वसिष्ठः—'स्नातकानां तु नित्यं स्यादन्तर्वासस्तथोत्तरम् । यज्ञो-पवीते द्वे यष्टिः सोदकश्च कमण्डलुः॥' इति । अत्रच दाक्षायणीति सामान्याभि-धानेऽपि कुण्डलधारणमेव कार्यम् ।—'वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥' इति ( ४।३६ ) मनुस्मरणात् । तथा देवं देवतार्चां, मृदं तीर्थादुद्धृतां, गां, ब्राह्मणं, वनस्पतींश्चाश्वत्थादीन्प्रद-क्षिणं कुर्यात् । एतान्दक्षिणतः कृत्वा प्रव्रजेदित्यर्थः । एवं चतुष्पथादीनपि । —'मृदं गां देवतां विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन् ॥' इति (४।३९) मनुस्मरणात् ॥ १३३ ॥

**न तु मेहेन्नदीछायावर्त्मगोष्ठाम्बुभस्मसु ।**
**न प्रत्यग्न्यर्कगोसोमसंध्याम्बुस्त्रीद्विजन्मनः ॥ १३४ ॥**

नद्यादिषु न मेहेत् न मूत्रपुरीषोत्सर्गं कुर्यात् । एवं श्मशानादावपि । यथाह शङ्खः—'न गोमयकृष्टोप्तशाद्वलचितिश्मशानवल्मीकवर्त्मखलगोष्ठबिलपर्वतपु-लिनेषु मेहेत भूताधारत्वात्' इति । तथाग्न्यादीन्प्रति अग्न्यादीनामभिमुखं न मेहेत् । नाप्येतान्पश्यन् । यथाह गौतमः—'न वाय्वग्निविप्रादित्यापोदेवतागाश्च प्रतिपश्यन्वा मूत्रपुरीषामेध्यान्युदस्येन्नैतान्प्रति पादौ प्रसारयेत्' इति । एतद्देशव्य-तिरेकेण भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्यादिति । यथाह वसिष्ठः— 'परिवेष्टितशिरा भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्यात्' इति ॥ १३४ ॥

**नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम् ।**
**न च मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ १३५ ॥**

नैवार्कमीक्षेतेति यद्यप्यत्र सामान्येनोक्तं तथाप्युदयास्तमयराहुग्रस्तोदकप्र-तिबिम्बमध्याह्नवर्तिन एवादित्यस्यावेक्षणं निषिध्यते न सर्वदा । यथोक्तं मनुना ( ४।३७ )—'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥' इति । उपभोगादन्यत्र नग्नां स्त्रियं नेक्षेत । 'न नग्नां स्त्रियमी-क्षेतान्यत्र मैथुनात्' इत्याश्वलायनः । संसृष्टमैथुनां कृतोपभोगाम् । उपभोगान्ते-ऽनग्नामपि नेक्षेत । चकाराद्भोजनादिकमाचरन्तीम् । तथाच मनुः (४।४३)— 'नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् । क्षुवतीं जृम्भमाणां च न चासीनां यथासुखम् ॥ नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम् । न पश्येत्प्रसवन्तीं च श्रेयस्कामो द्विजोत्तमः ॥' इति । मूत्रपुरीषे च न पश्येत् । तथा अशुचिः सन् राहुतारकाश्च न पश्येत् । चकारादुदके स्वप्रतिबिम्बं न पश्येत्—'न चोदके निरीक्षेत स्वं रूपमिति धारणा' इति वचनात् ॥ १३५ ॥

**अयं मे वज्र इत्येवं सर्वं मन्त्रमुदीरयेत् ।**
**वर्षत्यप्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा न च ॥ १३६ ॥**

---

१ एवं देवं क. २ प्रदक्षिणतः ख. ३ प्रत्यर्काग्निगो क. ४ श्मशानवल्मीक क. ५ नैता देवताःप्रति ख. ६ मेहनं कार्यं क. ग.

वर्षति सति 'अयं मे वज्रः पाप्मानमपहन्तु' इति मन्त्रमुच्चारयेत् । वर्षति अप्रावृतोऽनाच्छादितो न गच्छेन्न धावेत् । 'न प्रधावेच्च वर्षति' इति प्रतिषेधात् । नच प्रत्यक्शिराः स्वप्यात् । चकारान्नग्नो न शयीत । एकश्च शून्यगृहे नच नग्नः शयीतेति । 'नैकः स्वपेच्छून्यगृहे' इति च ( ४।५७ ) मनुस्मरणात् ॥ १३६ ॥

ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् ।
पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् ॥ १३७ ॥

ष्ठीवनमुद्गिरणं, असृग्रक्तं, शकृत् पुरीषं, शेषं प्रसिद्धं एतान्यप्सु न निक्षिपेत् । एवं तुषादीनपि । यथाह शङ्खः—'तुषकेशपुरीषभस्मास्थिश्लेष्मनखलोमान्यप्सु न निक्षिपेन्न पादेन पाणिना वा जलमभिहन्यात्' इति। अग्नौ च पादौ न प्रतापयेत् । नाप्यग्निं लङ्घयेत् । चकारात् ष्ठीवनादीन्यग्नौ न निक्षिपेत् । मुखोपधमनादि चाग्नेर्न कुर्यात् । तथाच मनुः ( ४।५३ )—'नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् । नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥ अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत् । न चैनं पादतः कुर्यान्न प्राणिवधमाचरेत् ॥' इति ॥ १३७ ॥

जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत् ।
नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत् ॥ १३८ ॥

जलमञ्जलिना संहताभ्यां हस्ताभ्यां न पिबेत् । जलग्रहणं पेयमात्रोपलक्षणम् । विद्यादिभिरात्मनोधिकं शयानं न प्रबोधयेन्नोत्थापयेत् । 'श्रेयांसं न प्रबोधयेत्' इति विशेषस्मरणात् । अक्षादिभिर्न क्रीडेत् । धर्मघ्नैः पशुलम्भनादिभिर्न क्रीडेत् । व्याधितैर्ज्वराद्यभिभूतैरेकत्र न संविशेन्न शयीत ॥ १३८ ॥

विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ।
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ १३९ ॥

जनपदग्रामकुलाचारविरुद्धं कर्म वर्जयेत् । प्रेतधूमं बाहुभ्यां नदीतरणं च वर्जयेदिति संबध्यते । केशादिषु संस्थितिं वर्जयेत् । चकारादस्थिकार्पासामेध्येषु च ॥ १३९ ॥

नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्क्वचित् ।
न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः ॥ १४० ॥

परस्य क्षीरादिपिबन्तीं गां परस्मै नाचक्षीत नच निवर्तयेत् । अद्वारेण कापथेन कश्चिदपि नगरे ग्रामे मन्दिरे वा न प्रविशेत् । नच कृपणस्य शास्त्रातिक्रमकारिणो राज्ञः सकाशात्प्रतिगृह्णीयात् ॥ १४० ॥

---

१ च्छादितो न इयात् क. २ मनुलंघयेत् ग. ३ मतिलंघयेत् ग. ४ प्राणाबाध. ख. ५ क्षीरादिधयन्तीं गां क.

